॥ श्रीः ॥

मैसूरु श्रीशङ्करविलाससंस्कृतपाठशालाध्यक्षैः श्रीमदुज्जयिनीसद्धर्मसिंहासनाधीश्वरजगद्गुरुचरपट्टाध्यक्षैः

मरुळाराध्यशिवाचार्यमहास्वामिभिः
प्रकटिता

# सिद्धान्तशिखोपनिषत्

उमचिगिशङ्करशास्त्रिविरचितवीरशैवभाष्यसहिता

# ಸಿದ್ಧಾಂತಶಿಖೋಪನಿಷತ್

ಉಮಚಿಗಿಶಂಕರಶಾಸ್ತ್ರಿವಿರಚಿತವೀರಶೈವಭಾಷ್ಯಸಹಿತಾ

---



आस्थानविदुषा,
मैसूरु श्रीमन्महाराजसंस्कृतमहाविद्यालयस्थ
श. वि. वेदान्तविश्रान्त प्राध्यापकेन
श्री एम्. जि. नञ्जुण्डाराध्येन
विरचितकन्नडप्रतिपादार्थतात्पर्येण सह सम्पादिता

१९८५

महीशूर श्रीमन्महाराजास्थानविद्वद्भिः ब्रह्मश्री गुरुशान्तशास्त्रिभिरेतद्भाष्यस्य तत्त्वार्थबोधिका भावप्रकाशनामिका व्याख्या कृता कर्णाटकभाषायां कर्णाटदेशीयानुद्दिश्यैर्पथा ॥ बेङ्गळूरु पुरस्था श्रीजगद्गुरु रेणुकाचार्य कृपापोषितधर्मग्रन्थभाण्डागारीयधनसहायेन सर्वाङ्गसौष्ठवेन मुद्रापितमेतद्भाष्यं सव्याख्यम्। तस्मात्तत्पुस्तकालयपोषकेभ्योऽर्पयामि चिरकृज्ञताम्। एतद्भाष्य रचनार्थं प्रोत्साहं कृतवतां तद्रचनोद्यमजन्यशिवतुष्टिं कारितवतां पण्डित श्री काशीनाथशास्त्रि महोदयानामर्पयाम्यनेकान् धन्यवादान्।

भाष्यकारः

---



Ujjayini Saddharma
Simhasanadiswara Jagadguru
Marularadhya Shivacharya
Swamiji

Jagadguru 1008
Sri Ujjayini Sadharma
Simhasanadiswara Siddeswara Raja
Desikendra Maha Swamiji

# प्रस्तावना

दार्शनिकक्षेत्रेषु निरतिशयदार्शनिकक्षेत्रोऽयं भारतदेशः। तत्रापि विभिन्नदर्शनैरलंकृतेयं सनातनी भारतरमणी!

सृष्टिर्हि वैचित्र्यपूर्णा। वैचित्र्यरहितावस्थैव हि प्रलय इत्युच्यते। एवं विचित्रसृष्टिषु मानवसृष्टिस्तु अत्यन्तं विचित्रा। इतरसृष्टिषु प्रकृतिभेदमात्रम्, न तावान् बुद्धिभेदः। मानवो हि बुद्धिजीवीति प्रसिद्धमेव। बुद्धयश्च परस्परमत्यन्तविलक्षणाः इति सर्वानुभवसिद्धमेव। एवं मतिभेदात् मतभेदादिकं सर्वं अनिवार्यमेव।

अतश्च रुचीनां वैचित्र्यादिति सुप्रसिद्ध शिवमहिम्नोक्तिं स्वीकृत्य विभिन्नरुचीनां स्वीयानुयायिनां मानवानां महदुपकाराय महामहिमोपेत महर्षयोऽप्यनेकानि विलक्षणानि दर्शनानि रचितवन्तः। सर्वाणि च दर्शनानि पदवाक्यप्रमाणज्ञैः प्रणीतत्वत् प्रामाणिकानीति सर्वैरङ्गीकृतानि। अतोऽत्र "नैको मुनिर्यस्य वचः प्रमाणम्" इति महाभारतोक्तिः सर्वेषां दर्शनानां प्रामाणिकतां समर्थयति।

भारतीयास्तिकदर्शनेषु सांख्य–योग–न्याय–वैशेषिक–पूर्वोत्तरमीमांसाख्येषु षड्दर्शनग्रन्थेषु आध्यात्मिकसूक्ष्म-सूक्ष्मतर-सूक्ष्मतमविषयविवेचनैर्युक्तत्वात् सर्वेषु दर्शनेषु वेदान्तदर्शनमेव सर्वातिशायितां भजते। शास्त्रदृष्ट्या वेदान्तशास्त्रमेकमेव। तथापि विभिन्नाचार्याणां वस्तुप्रतिपादनवैशिष्ट्यात् सम्प्रदायकवैचित्र्याच्च शक्तिविशिष्टाद्वैत शाङ्कर रामानुज माध्व वल्लभ निम्बार्क गौडीय रामानन्दाख्यैरष्टसंख्यात्मकभेदैर्विभक्तोऽस्ति।

वेदान्तशास्त्रोक्तप्रधानग्रन्थास्तु भगवद्गीता ब्रह्मसूत्रोपनिषन्नाम्ना सन्ति प्रसिद्धाः। एते प्रस्थानत्रयमित्यभिधानेनाभिधीयन्ते। इमानेवावलम्ब्यानेके आचार्याः स्वस्वमतानुसारेण प्रामाणिकानि भाष्याण्याविष्कृत्य मुमुक्षु लोकस्य महोपकारं कृतवन्तः। अन्याचार्य इव शक्तिविशिष्टाद्वैताचार्येषु आद्य शङ्कराचार्यसमकालिका आद्य नीलकण्ठ शिवाचार्या वेदव्यासकृत ब्रह्मसूत्राणामुपरि नीलकण्ठ भाष्येति नाम्ना स्वसिद्धान्तानुगुणभाष्यमभाषिषतेति श्रूयते। किन्तु दुर्दैववशात्तद्भाष्यमधुना नोपलभ्यते। तथाप्येतन्न्यूनतापूरणाय श्रीपतिपण्डिताराध्यभगवत्पादाः षष्ट्युत्तरसहस्रात्मके (१०६०) ईसवीये वत्सरे व्याससूत्राणामुपरि वीरशैवभाष्यमाविष्कृतवन्तः। इदमेव भाष्यं श्रीकरभाष्यमिति नाम्ना दार्शनिकक्षेत्रे प्रथितमस्ति।

एवमेव द्वितीयप्रस्थानरूपेणाङ्गीकृतायाः श्रीमद् भगवद्गीताया अपि वीरशैवसिद्धान्तबोधकभाष्याभावात् आधुनिकविद्वान्मैसूरुविश्वविद्यालयान्निवृत्त संस्कृत प्राध्यापको डा० टी. जी. सिद्धप्पाराध्योऽतिमनोज्ञं वीरशैवभाष्यं विलिख्य गीताप्रस्थान भाष्याभावतां पूरितवान्। अपि च वेदान्तशास्त्रस्य वीजरूपेणावस्थितोपनिषत्सु ईश केन मुण्डक सिद्धान्त शिखोपनिषदामुपरि धर्मरत्नपदभागुज्जैनीसद्धर्मसिंहासनास्थानविद्वान् लिं. पं. उमचगि शङ्करशास्त्रि महोदयोऽतिप्रयासेन शास्त्रीयतर्कोपनिबद्धभाष्याणि निर्माय वीरशैवसिद्धान्तविख्यापनेऽपूर्वोपकारं चकार।

अनेन प्रकारेण श्वेताश्वतरोपनिषदुद्दिश्य डा० टी. जी. सिद्धप्पाराध्य एवमेव प्रसिद्धकैवल्योपनिषन्निमित्तीकृत्य श्री ष. ब्र. सदाशिवशिवाचार्याः वीरशैवसिद्धान्तप्रतिपादकभाष्ये संसृज्य प्रस्थानत्रयान्तर्गतोपनिषद्भाष्यरिक्ततां पूरितवन्तौ।

इत्थं वीरशैवसिद्धान्तोद्दामविद्वद्भिर्लिखितानि सर्वाण्युपनिषद्भाष्याणि वाराणसीस्थसम्पूर्णानन्द संस्कृतविश्वविद्यालये शक्तिविशिष्टाद्वैत वेदान्तशास्त्र प्रथमखण्डे पठ्यपुस्तकरूपेण स्वीकृतानि सन्ति ।

## एतद्ग्रन्थवैशिष्टयम्—

इयं सिद्धान्तशिखोपनिषत्

श्रीरुद्रबृहदारण्य श्वेताश्वतरमुण्डकाः ।
सुसिद्धान्त शिखामुख्याः . . ॥

इति वीरशैवाचारकौस्तुभादिग्रन्थेषु संकीर्तितत्वात् प्रामाणिकोपनिषदभ्यन्तरे परिगणितत्वाच्च प्रामाणिकोपनिषदेवेति निर्णीयते ।

शिवोपदिष्टा अष्टाविंशतिसंख्याकाः शिवागमाः 'सिद्धान्ताः' इति शब्देन व्यवह्रियन्ते । सिद्धान्तसंज्ञकानामष्टाविंशत्यागमानामुत्तरभागे वीरशैवमतं निरूपितं वर्तते । तदुक्तं सिद्धान्तशिखामणौ —

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ॥ इति ।

तत्र सिद्धान्तानामागमानामुत्तरभागे वीरशैवसिद्धान्तस्य प्रतिपादनाद् अपिचैतेषामागमानामाधारेण वीरशैवतत्वनिरूपकग्रन्थस्य सिद्धान्तशिखामणीत्यभिधानं यथान्वर्थकं तथैव वीरशैवसिद्धान्तेऽवस्थित दुरूह सिद्धान्तमर्मावबोधकत्वादियं सिद्धान्तशिखोपनिषन्नाम्ना प्रसिद्धास्ति ।

अस्यामुपनिषदि वीरशैवाः स्वीयेष्टलिङ्गं स्वशरीरेऽनवरतं धार्यमिति दृष्टान्तैरनेकैर्निरूपितमस्ति । एवमेवेष्टलिङ्गधारणे यथाधिकृताधिकारिणः पुरुषास्तथैवस्त्रीणामप्यधिकारोस्तीति विविच्य लिङ्गधारिभिस्त्रीभिः रजस्वला

दिसमये स्वीयेष्टलिङ्गधारणं कार्यमकार्यं वेति विचार्य तत्रासन्नविप्रतिपत्तिभ्यः शास्त्रीयप्रतिवचनं च दत्वा केवलेष्टलिङ्गाराधने सूतकदोषो नास्तीति सिद्धान्तितमस्ति। अनया प्राप्तावसरो भाष्यकारः श्रीशङ्करशास्त्रिमहोदयोऽनेकैः प्रमाणैरेतद्विषयं शास्त्रसम्मतमिति विस्तरेण प्रतिपादितवान्।

इयं च १९३०तमे क्रिस्ताब्दे पं० काशिनाथशास्त्रिमहोदयेन कर्नाटकभाषाक्षरेषु मुद्रितासीत्। सम्प्रति साम्प्रतिकोज्जैनी सद्धर्मसिंहासनाधीश्वरा श्री १००२ जगद्गुरु मरुलाराध्यशिवाचार्य महास्वामिन इमां देवनागरी लिप्या मुद्रापयित्वा सर्वेषां सुखावलोकनावसरतां दत्तवन्तः। अपि चाग्रे पूज्यपादाः वीरशैवसिद्धान्तप्रतिपादकदुर्लभानेकग्रन्थप्रकाशने स्वीयामोघसंकल्पविशिष्टाः सन्ति। अतस्तेषां पूज्यजगद्गुरूणां सन्निधावनन्तशिरसाष्टाङ्गप्रणामान् समर्पयन् तेषामुदात्तादर्शभावनां मुक्तकण्ठेन स्तौमि।

विद्वज्जनविधेयः

अक्षय तृतीया

गुळेदगुड्ड—अमरेश्वरमहाध्यक्षः

वेदान्तभागे, संपूर्णानन्द संस्कृतविश्वविद्यालये. वारणस्याम्।

॥ श्रीः ॥

॥ श्रीदक्षिणामूर्तये नमः ॥

# सिद्धान्तशिखोपनिषत्

## श्रीशङ्करशास्त्रिविरचितवीरशैवभाष्यसहिता

---

यत्कृपालेशमात्रेण वाञ्छितं लभते पुमान् ।
तं वन्दे गिरिजानाथं परं ब्रह्म शिवाभिधम् ॥ १ ॥

श्री वीरशैवसद्धर्मस्थापकान् सततं भजे ।
रेणुकादिशिवाचार्यान्निगमागमविश्रुतान् ॥ २ ॥

स वेत्यादिश्रुतिप्रोक्ताः पुरुषास्सन्ति पञ्चधा ।
तानेव श्रीगुरून्नौमि शिवव्यूहान् सनातनान् ॥ ३ ॥

लोकमेतं समुद्धर्तुं लिङ्गपञ्चकनिर्गतान् ।
सर्वशक्तियुतान् वन्दे पञ्चाचार्यान् जगद्गुरून् ॥ ४ ॥

यत्कारुण्यलवप्रबुद्धमनसा भाष्यं मया रच्यते
शुद्धं शुद्धजनप्रमोदजनकं श्रीवीरशैवाभिधम् ।
तं सिद्धान्तनितान्तबद्धहृदयं श्री सिद्धलिङ्गाह्वयम्
वन्दे विश्वगुरुं बुधामरतरुं सद्धर्मपीठेश्वरम् ॥ ५ ॥

शङ्कराख्यसुधीरशान्तो नन्दिगोत्रसमुद्भवः ।
शङ्करप्रीतये भाष्यं कुरुते शाङ्करव्रती ॥ ६ ॥

समारब्धमिदं कार्यं कोट्टूरेश्वरसन्निधौ ।
तदनुग्रहबलादेव निर्विघ्नं पूर्णतामियात् ॥ ७ ॥

अय्यप्पार्यः पिता यस्य चन्नाम्बा जननी तथा ।
सोऽहं श्री पितरौ नत्वा भाष्यं कर्तुं समारभे ॥ ८ ॥

अथ तत्रोपनिषदारम्भे लिङ्गधारणात्मकदीक्षासंपन्नस्य षट्स्थल-ब्रह्मजिज्ञासोः वीरशैवस्य शिवमुद्दिश्य निरतिशयसुखविषयकप्रार्थनायां विनि-युक्तं शान्तिमन्त्रमाह --

ॐ शन्नो मित्रश्शं वरुणः । शन्नो भवत्वर्यमा ।
शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो
ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि ।
त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि ।
सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु
माम् । अवतु वक्तारम् । ॐ शान्तिश्शान्तिश्शान्तिः ॥

ओमिति ब्रह्मवाचकम् । तद्वाच्यो मित्रः । सर्वभूतेषु मेद्यति स्निह्यति इति मित्रः तिले तैलमिव, क्षीरे सर्पिरिव स्नेहेनाविनाभावेन वर्तमानः । 'ञि मिदा स्नेहने' इति धातोः सर्वप्राणिहृदयान्तर्यामित्वेन प्रेरकः प्राणलिङ्ग-रूप ईश्वर इत्यर्थः । 'स एषोऽन्तर्हृदय आकाशः' इति श्रुतेः ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

इति कृष्णगीतोक्तेः । नः अस्माकं शं सुखकृत् शङ्करः इत्यर्थः । भवतु अस्तु ।

वरुणः वृणोतीष्टानमुं भक्तलोक इति वरुणः विराडपरपर्यायेष्टलिङ्ग-मित्यर्थः ।

इष्टावाप्तिकरं सक्षादनिष्टपरिहारकम् ।

इत्युक्तेः । वृणुते धत्ते इमं भक्तलोकः स्वशरीरे इति वा वरुणः । तदुक्तं श्रीमन्नीलकण्ठशिवाचार्येण—

वरणं नाम तद्रूपधारणं विधिमार्गतः ।

इति । स भिन्नशब्दित ईश्वरः इष्टलिङ्गरूपः नः अस्माकं शं सुखकरो भवतु । एवं शन्नो भवत्विति सर्वत्रानुषङ्गः । अर्यमा—इर्यति गच्छतीत्यर्यमा, ऋगताविति धातोः स एवेष्टलिङ्गरूपः भक्तस्य शुच्यशुचिगमनागमनादिकालेऽपि भक्तशरीराविभक्त एव तत् इष्टलिङ्ग शन्नो भवतु ।

इन्द्रः । इन्दतीति इन्द्रः, 'इदि परमैश्वर्ये' इति धातोः परमेश्वरः शन्नो भवतु । बृहस्पतिः — बृहतां वेदमन्त्राणां पतिः ईश्वरः शन्नो भवतु 'ईशानः सर्वविद्यानाम्' इति श्रुतेः । विष्णुः—विश्वं वेष्टि-व्याप्नोतीति विष्णुः 'विषुऌव्याप्तौ' इति धातोः । सर्वव्यापकः शिवः ।

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः ॥

इति श्रुतेः । उरुक्रमः इति तस्यैव विशेषणं लिङ्गोद्भवलीलायां ब्रह्मविष्ण्वादिमोहशमनार्थं प्रकटीकृतापरिमितशक्तिमत्त्वात् । तच्च केनोपनिषदि यक्ष-देवसंवादेऽपि प्रसिद्धम् ।

शक्तौ चरणविक्षेपे परिपाट्यामपि क्रमः ।

इति क्रमशब्दस्य शक्तिपरत्वावगमात् ॥

कैवल्योपनिषदि—उमासहायत्वत्रिलोचनत्वनीलकण्ठत्वतमःपरत्वसमस्तसाक्षित्वादिसगुणनिर्गुणसाधारणधर्मलिङ्गात् सगुणनिर्गुणयोरभेदं प्रकटीकृत्य तस्यैव शिवस्य – 'स ब्रह्मा सेन्द्रः सोऽक्षरः परमः स्वराट्' 'स एव विष्णुः

स प्राणः' इत्यादिना ब्रह्मविष्णिन्द्रप्राणादिशब्दाभिधेयत्वस्योक्तत्वात् नाऽत्र विष्ण्वादिपदानि त्रिलोचनत्वनीलकण्ठत्वादिधर्मविशिष्टशिवातिरिक्तशङ्खचक्रगदा कुलिशपाशधरादिपराणि ॥

किञ्चेयं नित्यसुखदत्वप्रार्थना शिवलिंगैकविषयिणी न तु शरीरस्थप्राण-करणाभिमानिनानादेवताविषयिणी, तासां देवतानां नित्यसुखदत्वायोगात् । सुखार्थी सुखिनं प्रार्थयते, धनार्थी धनवन्तं, न तु सुखरहितं न तु निर्धनम् । तत्तदभिमानिनीनां देवतानां जीवभावाविनाभूतसुखाभाववत्त्वादशङ्करत्वाच्छङ्कर विषयिण्येव । कथं वा वस्तुतश्शङ्करं विना शङ्करत्वमभ्यर्थयते सुखार्थी ।

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति श्रुतिसूत्राभ्यां गुहाशब्दित शरीरहृदयान्यतरप्रवेशस्य शिवजीवोभयस्यैवोक्तत्वात् जीवस्यैकस्यैव शरीरा-भिमानिनः शरीरे पृथिव्यादिपञ्चभूताभिमानित्वेन ब्रह्मादिपञ्चनामभिः वर्त-मानत्वात् । तदुक्तं सूतसंहितायां —

कार्ये ब्रह्मा महीभागे कार्ये विष्णुर्जलांशके ।
वह्निभागे तथा रुद्रो वाय्वंशे चेश्वरः (स्मृतः) स्थितः ॥
आकाशांशे शरीरे तु साक्षादेव सदाशिवः ॥

इति । उक्तं चानुभवसूत्रेऽपि —

ब्रह्मा हरिश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
साक्षात् परशिवश्चेति क्रमशः षट्स्थलात्मकाः ॥

इति । षट्स्थलात्मका इत्यस्य षडङ्गस्थलात्मका इति बोध्यम् । अत्र षष्ठाङ्गस्य साक्षात्परशिवत्वोक्तिस्तु, सर्वोपाधिविनिर्मुक्तात्मनः शिवैक्यापन्न-त्वात् शिवस्वरूपत्वात् तदङ्गस्याङ्गयभिन्नत्वात् सङ्गच्छते । तस्मात् ब्रह्म

विष्ण्वादीनामुपासककोटिप्रविष्टत्वात् , एकस्यैव परमात्मनः आधारादि-स्थानेषु आचारादिलिङ्गापरपर्यायसद्योजातादिपञ्चनामधेयैः वर्तमानत्वात् । तदुक्तमनुभवसूत्रे —

एकमेव परं लिङ्गमङ्गेऽस्मिन् सुप्रतिष्ठितम् ।
सर्वतोमुखमाभाति नामरूपक्रियात्मना ॥

इत्यादिना उपास्यकोटिप्रविष्टत्वात् शिवस्यैव नित्यसुखदातुरभ्यर्थनीयत्वात् । न हि याचको याचकान्तरं याचते, न हि वा स्वयमर्थी स्वमर्थिनमे-वार्थयति । तस्माल्लिंगस्यैवेयमभ्यर्थना । हार्दाष्टदलकमलमध्यवर्तिनो लिंगस्य सुषुप्तिशब्दितमोक्षापरपर्यायपरमसुखप्रापकत्वात् 'लिङ्गे सुषुप्तिः' इति श्रुतेः ।

लिङ्गे सुषुप्तिरित्येतैः सुखं लिङ्गवतां परम् ।

इत्यादिना श्रीमन्नीलकण्ठशिवाचार्यैस्तथैवोक्तत्वात् ॥

ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्याश्च लोकपाः ।
मुनयः सिद्धगन्धर्वा दानवा मानवास्तथा ॥

सर्वे च ज्ञानयोगेन सर्वकारणकारणम् ।
पश्यन्ति हृदये लिंगं परमानन्दलक्षणम् ॥

इत्यनेन श्रीरेणुकशिवाचार्यैरपि तथोक्तत्वात् ॥

किञ्च ब्रह्मोपेन्द्रमहेन्द्रमुख्यविभवास्थायिताहेतुकविरागविजृम्भितनित्यज्ञा-नानन्दादिकल्याणगुणरत्नरत्नाकरसाम्बशङ्करानुरागातिशयसमुदितदीक्षालक्षणगुरु-कारुण्यस्य ब्रह्मविद्याधिकारिणः शिष्यस्येयं प्रार्थना । मोक्षापरपर्यायपरम सुखार्था, न त्वन्यार्था । अन्यार्थस्तु संभवत्येव सहस्रे शतमिव । इत्थं च परमसुखकरत्वान्वयस्य प्रसिद्धमित्रवरुणाद्यर्थेषु वक्तुमशक्यत्वात् ॥

मित्रवरुणादिशब्दानां कोशप्रसिद्धार्थस्य परित्यागौचित्यात् । शम्भौ मृडे शङ्करे शङ्करत्वस्य कोशप्रसिद्धार्थस्यैव परित्यागायोगात् । सति बाधके कोशस्यापि शक्तिग्राहकत्वानङ्गीकारात् ।

गुणे शुक्लादयः पुंसि गुणिलिंगास्तु तद्वति ।

इति कोशेन 'शुक्लः पटः नीलो घटः' इत्यत्र समानविभक्तिकस्थले शुक्लादि पदस्य रूपादिवाचकत्वेऽपि रूपवति शक्तिग्राहकत्वमिति यत्तदनङ्गीकृतं शास्त्रकारैः गौरवदोषग्रस्तत्वात् । किन्तु रूपवति शुक्लादिपदानां लक्षणा-ग्राहकत्वमेवाङ्गीकृतम् ॥

रूढेर्योगापहारकत्वमपि रूढ्यर्थाबाधस्थल एव । अन्यथा पंकजमानयेत्यादौ पद्मबाधोऽपि योगार्थकुमुदबोधो न स्यात् । प्रकृते च भवत्विति क्रियया शमित्यस्य शंकर इति वक्तव्यत्वात्, अन्यैरपि तथैवोक्तत्वात् ॥

मित्रः शंकरो भवतु, वरुणः शङ्करो भवतु, इत्यादेः समानकर्तृक विभक्तित्वात् मित्रशङ्करयोः रूढ्यर्थांगीकारे शङ्करत्वसूर्यत्वयोरेकत्र बाधितत्वेन शङ्करे मित्राभेदान्वयस्य बाधात् । मित्रादिपदानां पाचकादिवत् योगार्थ स्वीकारे बाधकाभावात् । कोशावगतरूढ्यर्थे अग्निमसूर्यवाचकार्यमन्शब्देन पौनरुक्तेः दुर्वारत्वाच्च ॥

इन्द्रविष्ण्वादिशब्दानां शिवपरत्वस्यापि कैवल्योपनिषत्प्रसिद्धत्वात् नेऽयं सुखकृत्वप्रार्थना शंकरभिन्नदेवताविषयिणी । तत्सुखप्राप्त्यर्थमेव सुखदात्रेऽन्तर्लिंगाय भावग्राह्याय नमस्करोति — नमो ब्रह्मण इति ।

ततस्तदर्थमेवं प्राणलिंगाय नोग्राह्याय नमस्करोति—नमस्ते वायो इति । हे वायो प्राणलिंग 'प्राणानिलोऽयं शिवसूत्रमुच्यते' इत्यनुभवसूत्रोक्तेः ।

ते तुभ्यं नमः । दीक्षाकाले श्रीगुरुणा शिष्यप्राणस्य लिंगे लिंगस्य च प्राणे निवेशितत्वात् सर्वान्तर्यामिणः चिद्रूपस्य शिवस्य प्राणलिंगत्वेन व्यपदेशात्, तस्यापरोक्षत्वान्मने ग्राह्यत्वात् संबुद्धिः ॥

तस्यैवेष्टलिंगतामाह — त्वमेवेति । त्वमेव प्राणलिंगमेव प्रत्यक्षं बृहद्दक्कलाग्राह्यं ब्रह्म इष्टलिंगमसि । जगज्जन्मादिकारणं ब्रह्मैव लिंगं बृहत्वात् बृंहणत्वात् ब्रह्मशब्दाभिधेयकम् । सच्चिदानन्दमपरिच्छिन्नं भक्तोपासनार्थं स्वस्वातन्त्र्यशक्त्या घृतकाठिन्यन्यायेन परिच्छिन्नमिष्टलिंगमित्यर्थः । तस्मात् श्रीगुरुणा—

प्राणवद्धारणीयं तत् प्राणलिंगमिदं तव ।
कदाचित् कुत्रचिद्वापि न वियोजय देहतः ॥
यदि प्रमादात् पतिते लिंगे देहान्महीतले ।
प्राणान् विमुञ्च सहसा प्राप्तये मोक्षसम्पदः ॥

इति सम्बोधितः शिष्योऽहं त्वां प्राणलिङ्गात्मकेष्टलिङ्गं प्रत्यक्षं ब्रह्म ब्रह्मैव वदिष्यामि । श्रीगुरूपदेशो यथा तथैवाहमपि वदिष्यामीत्यर्थः । ऋतं प्रापितं श्रीगुरुणा मे हस्तमिति वदिष्यामि । हे शिष्य तव मुक्त्यर्थं ते हस्तं प्रापितमिदमिष्टलिंगमिति यथा गुरुवर्येणोपदिष्टं तथैवाहमपि वदिष्यामीत्यर्थः । 'प्रापिते तु भवेदृतम्' इति नानार्थरत्नमाला ।

यद्वा त्वामन्तर्लक्ष्यमन्तर्लिङ्गं ऋतं त्रिकालाबाध्यं त्वां बहिर्लक्ष्यमिष्टलिङ्गं सत्यं त्रिकालाबाध्यमेव वदिष्यामि न तु परिच्छिन्नमपि त्वामनृतं वदिष्यामीत्यर्थः । तथैव श्रीगुरूपदेशात् । उपदिश्यते च दीक्षागुरुणा हे वत्स, तव वामहस्ते गतमेतच्च प्राणलिंगमिति विभावय । हे वत्स एतदेव खलु सर्वतत्त्वातीतं वस्त्विति अनुचिन्तय । हे वत्स अजहर्योरपि दुर्लक्ष्यं निजतत्त्वमिति निश्चिनु । निमेषमात्रमप्येतत् त्वच्छरीरात् न वियोजयन्नवधानेन

धारय। त्रिकालमप्येतत्समर्चां नियमेन समाचर। यत्किञ्चिदपि वस्तुजातं प्राणलिंगेऽस्मिन्नसमर्प्य न स्वीकुरु। इतो भोगमोक्षाद्यः सर्वेऽपि पुरुषार्थाः करगता एवेति विश्वसिहि। सर्वक्लेशान्परित्यज्य सदा सुखयुक्तो भव। सत्यमिदं सत्यमिदमिति॥

तत् ब्रह्मशब्दितं लिंगं मां शिष्यं अवतु पालयतु। अन्तर्बहि स्वधानपूर्वक र्चनार्पणध्यानधारणशक्तिदानेन रक्षतु। मद्दुःखशेषप्रहाणं कृत्वा परं सुखं ददातु॥

तत् तदेवान्तर्बहिस्थितं लिंगं वक्तारमाचार्यमुपदेष्टारं अवतु। अष्टावरण पञ्चाचारषट्स्थलब्रह्मोपदेष्टृत्वशक्तिदानेन रक्षतु। वक्तारमित्यस्य तथा वदन्तं मामिति वार्थः। अवतु मामवतु वक्तारमिति पुनः प्रार्थना स्वपालनौ-दासीन्यवारणार्था॥

यद्वा मित्रादिप्रथमान्तपदपञ्चकस्य पृथिव्याद्यभिमानिब्रह्माद्युपास्यसद्यो जाताद्यपरपर्यायाचारादिलिंगपञ्चकपरत्वेन व्याख्यातुं शक्यत्वात् विष्णुपदस्या परिमितशक्तिविशिष्टसर्वव्यापकमहालिंगपरत्वेनाभिधातुं शक्यत्वाच्च। शंकरत्व प्रार्थनायाः षट्स्थलपरब्रह्मशंकरविषयकत्वं वक्तुं शक्यत एव॥

तथाहि—मेद्यति कार्यब्रह्मणि स्वांगे स्नेहेन अविनाभावसंबन्धेनेति मित्रः, आचारलिंगरूपः। 'यस्यात्मा शरीरम्' इत्यादिश्रुतेः। अस्माकं दीक्षितानां मम दीक्षितस्य वा, वचनव्यत्ययश्छान्दसः। शं शंकरः पृथिवी ग्रन्थिच्छेदेनसुखकृत् भवतु अस्तु। एवं शन्नो भवत्विति सर्वत्रानुषंगः॥

वरुणः वृणुते हरिरमुं धत्ते अनितरसाधारणभक्त्या स्वहृदि धारयतीति वरुणः जलाभिमानिहर्यवच्छिन्नगुरुलिंगरूपः। अर्यमा इयर्ति रुद्रं गच्छति तेजोमण्डलमहंतयाच्छाद्य स्थिते रुद्रे अवियोगेन वर्तत इत्यर्यमा

शिवलिंगरूपः । इन्द्रः ईशांगावच्छिन्नचरलिंगरूपः वाय्वभिमानीश्वरां-गकत्वाच्चरलिंगस्य ।

बृहस्पतिः वेदजनकत्वेनाधीश्वरः प्रसादलिंगरूपः 'वाक्पति'रित्यादि श्रुतेः । आकाशाभिमानिसदाशिवांगावच्छिन्नः । उरुक्रमः अमेयशक्तिः विष्णुः सर्वव्यापकमहालिंगम् । अत्र विष्णुशब्दितमहालिंगस्य उरुक्रमशब्देनाप-रिमितचिच्छक्तिरूपमंगमनुक्तम् । एवं च मित्रत्वादिविष्णवन्तैः प्रथमैकवचनान्त पदैः क्रमेण कार्यब्रह्मांगावच्छिन्नाचारादिषड्लिंगानि कारणब्रह्माणि सुख-करत्वप्रार्थनाविषयत्वेनोक्तानि इति मन्तव्यम् । तस्मात्परमसुखप्राप्त्यर्थमेव 'नमो ब्रह्मणे' इति षट्स्थलात्मकपरशिवब्रह्मणेऽन्तर्लिंगाय नमस्करोत्यर्थी ॥

ततश्च प्राणलिंगस्यापरोक्षत्वात् मनोग्राह्यत्वात् 'नमस्ते वायो' इति संबुद्धिपूर्वकं वायुशब्दितप्राणलिंगाय नमस्करोति । 'प्राणानिलोऽयं शिवसूत्र-उच्यते' इत्यनुभवसूत्रोक्तेः । मित्रादिषट्प्रथमान्तादिपदातिरेकानतिरेकाभ्यां प्रदर्शनाभावात् । भगवत्याः श्रुतिदेव्यास्तात्पर्यं वीरशैवशास्त्रप्रसिद्धषट्स्थल-सिद्धान्ते अत्रैव वक्ष्यमाणे च वर्तते इत्यपि वर्णितुं शक्यत्वात् । षट्स्थलब्रह्मविषयिणीयं प्रार्थनेति निश्चीयते । अन्यत्सर्वं पूर्वं व्याख्यातमेव । शान्तिः शान्तिरिति त्रिरुच्चारणं तापत्रयशमनार्थं त्रिमलविलयनार्थमिति बोध्यम् ॥

॥ इति शान्तिमन्त्रभाष्यं समाप्तम् ॥

इह ऋग्यजुस्सामाथर्वणाभिधाना श्रुतिजननी स्वशिरःसारसर्वस्वं सर्व-सिद्धान्तशिखारत्नं शक्तिविशिष्टाद्वैत (सिद्धान्तरत्नं) षट्स्थलसिद्धान्तं स्वशिष्टतनयसमुद्धिधीर्षया अभिदधाना सिद्धान्तशिखाभिधानमादधाना आदौ प्रारिप्सितपरिसमाप्त्यादिफलं स्वशिष्टपुत्रपौत्राद्याचारविषयतया आच रिष्यमाणं भवत्वित्याशयेन स्वयमपि मंगलमाचरति —

**अथ भरद्वाजः कुमार पप्रच्छ। किमेवं भवादृशानां परम शिवभक्तानां सिद्धान्तं कुतः सर्वे न विदन्तीति ॥ १ ॥**

अथेति ।

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इत्युक्तेरथशब्दस्य मांगलिकत्वावगमात् । यद्वा आनन्तर्यार्थ वास्याथशब्दस्य । उच्चारणमात्रेण मंगलफलतापि संभवत्येव । अ र्थकत्वेन क्रियमाणमृदङ्गादिध्वनिश्रवणमिव अन्यार्थनीयमानोदकु दर्शनमिव च ।

किमानन्तर्यार्थतेति चेत्, कर्मकाण्डे विस्तरेण नश्वरफलकाग्निष्टोम श्वमेधान्तसकलपशुकर्मप्रतिपादनानन्तर्यार्थतेति ब्रूमः । प्रश्नप्रतिवचनप्र प्रदर्शनं सुखप्रतिपत्यर्थम् ॥

अनुबन्धचतुष्टयमध्येतृप्रवृत्त्यंगम् । तस्मात्तदप्यादौ निरूपणीय तथा चात्र लिंगांगसामरस्यं शक्तिविशिष्टाद्वैत साधनरूपं विषयः । तं वक्ष्यति 'योऽयं नकारः सोऽयमकारः' इत्यादिना । फलं च स शुद्धबुद्धपरमानन्दपरमशिवस्वरूपः इति, 'ब्रह्मभूयाय कल्पते' इति सकृद्ब्रवीति । अधिकारिणं च 'ग्राह्यमेतन्न वाच्यम्, पतिताय नास्ति परीक्षिताय' इत्यादिना पतितादिव्यावृत्या सर्वार्थवेत्तारं दीक्षितमा संबन्धस्तु शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभावः ।

भरद्वाजः—भरद्वाजनामा ऋषिः विधिवदुपसत्युपार्जितगुरुक लक्षणदीक्षासंपन्नः कुमारं स्वगुरुं स्वस्य लिंगधारणदीक्षां कृतवन्तं पप्रच्छ पृष्टवान् ॥

कथमवगम्यतेऽयं भरद्वाजो लिंगधारणदीक्षासंपन्न इति सिद्धान्तं कुतः सर्वे न विदन्तीति कृतप्रश्नस्य प्रथम सिद्धान्तज्ञानसद्भावस्य वर्णनीयत्वात् ; सिद्धान्तस्य परोक्षज्ञानस्याप्यभावे तथाविधप्रश्नासंभवात् । परोक्षज्ञानस्य च शक्तिविशिष्टाद्वैतरूपलिङ्गाङ्गसामरस्यविषयकत्वात् लिङ्गांगसामरस्यस्य च प्रणवसहितपञ्चाक्षरमन्त्रबोधनीयत्वात् । तस्य मन्त्रस्य दीक्षाकाले उपदेशार्हत्वात् तस्यैव मुण्डकादौ परविद्येति व्याख्यातत्वात् । तस्यां परायां ब्रह्मविद्यायां लिंगधारणात्मकदीक्षासंस्कृतस्यैवाधिकारात 'संस्कारपरामर्शात्तद भावाभिलापाच्च' इत्यादिसूत्रैरपरब्रह्मविद्यायामप्यसंस्कृतस्य नाधिकारे, किमु वक्तव्यं परायां ब्रह्मविद्यायां नाधिकार इति ॥

किञ्च मुण्डकोपनिषदि शिरोव्रतस्य ब्रह्मविद्याधिकारिविशेषणत्वेन प्रतिपादनात् । 'तेषामेवैतां ब्रह्मविद्यां वदेत्' इति शिरोव्रतवतामेव ब्रह्मविद्यां ब्रूयादित्याचार्यस्याऽपि नियमविधानात् । 'नैतदचीर्णव्रतोऽधीते' इति शिरोव्रताभावे ब्रह्मविद्याधिकारनिषेधात् । शिरसि अथर्वशिरसि प्रतिपादितं यद्व्रतं तदेव शिरोव्रतमिति वक्तव्यत्वात् ॥ वीरशैवो महाव्रतीति रेणुकभगवत्पादोक्तप्रकारेण यावज्जीवलिङ्गधारणात्मकमहाव्रतमेव शिरोव्रतमिति निश्चीयते ।

कुतः ? अथर्वशिरोमुण्डककैवल्यश्वेताश्वतरकालाग्निरुद्रोपनिषदाद्युक्त पाशुपतव्रतशिरोव्रतात्याश्रमव्रतशाम्भवव्रतानामर्थैक्ये बाधकाभावात् । तेषामर्थाभेदे तत्तद्व्रतविशिष्टाधिकारिविशेषान्वेषणापेक्षयैकस्यान्वेषणसौकर्यात् ।

इत्थं च सूतसंहितायाम्—

व्रतं पाशुपतं चीर्णं यैः द्विजैरादरेण तु ।
तेषामेवोपदेष्टव्यमिति वेदानुशासनम् ॥

इति शिरोव्रतस्य पाशुपतापरपर्यायत्वेन कथनात् ।

एतद्व्याख्यानक्रमेण माधवाचार्येणापि 'तेषामेवैतां ब्रह्मविद्यां वदेत्' शिरो-व्रतं विधिवद्यैस्तु चीर्णम्' इति मुण्डकोपनिषद्वाक्यस्य वेदानुशासनपदाभिप्रेतत्वे-प्रदर्शनात् ।

नन्वस्तु पाशुपतव्रतस्य ब्रह्मविद्याङ्गता । तस्य (भरद्वाजस्य) तत्र भस्मधारणपरत्वाद्यवसायात् । भरद्वाजस्य लिंगधारणशालित्वे किं मानमिति चेदुच्यते । अथर्वशिरसि पाशुपतव्रतरूपलिंगधारणव्रतांगत्वेन भस्मधारण-मुक्तमिति निश्चीयमानत्वात् । न केवलं भस्मधारणव्रतमेव पाशुपत-व्रतम् ।

लिंगांगसंगिनां वत्स पुनर्जन्म न विद्यते ।
एष पाशुपताचारः पशुपाशनिवृत्तये ॥

सर्ववेदान्तसारोऽयं अत्याश्रम इति श्रुतिः ।
परब्रह्माभिधं लिंगं पशुपाशविमोचकम् ॥

यो धारयति सद्भक्त्या स पाशुपत उच्यते ।
शरीरत्रितये भक्त्या लिंगं परशिवात्मकम् ॥

यो धृत्वा विचरेद्भूमौ स पाशुपत उच्यते ॥
लिंगं शिवो भवेत् क्षेत्रमंगं संयोग आश्रयः ॥

तस्माल्लिंगांगसंयुक्तो योऽपि सोऽत्याश्रमी भवेत् ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा ॥

यस्तु लिंगांगसंयुक्तः स एवात्याश्रमी भवेत् ॥

इत्यादित्यलिंगस्कन्दपुराणादिवाक्येषु पाशुपतात्याश्रमिशब्दयोः लिंग-धारिपर्यायत्वेन निर्देशात् । शिरोव्रतपाशुपतव्रतापरपर्याययावज्जीवलिंगधारण-महाव्रतसंपन्न एव भरद्वाजः । उक्तं च लिंगपुराणे कण्ठत एव—

कश्यपात्रिभरद्वाजगौतमाद्या महर्षयः ।
धारयन्ति सदा लिंगमुत्तमांगे विशेषतः ॥

इति । लिंगधारणात्मकात्याश्रमशिरोव्रतपाशुपतव्रतशाम्भवव्रतांगानां शिवाश्रमीयधर्माणां पाशाश्रयत्वाभावात् । पाशाश्रयपशुधर्मातिरिक्तलिंग धारणात्मकपञ्चमाश्रमशब्दितात्याश्रमस्थानां शिवधर्मादिशास्त्रप्रसिद्ध ब्रह्मचर्यादि चतुर्विधशिवाश्रमवतां वीरशैवानामेव ब्रह्मविद्यायामधिकारसद्भावान्न प्राकृता-प्राकृतसन्यासमात्राधिकारिका षट्स्थलब्रह्मविद्या ।

तस्माद्भरद्वाजस्य ब्रह्मचर्याद्याश्रमान्यतमवत्वेऽपि अत्याश्रमधर्मपरत्वात् मोक्षमार्गोपयोगिवीरशैवीयपतिधर्मनिष्ठत्वात् ब्रह्मविद्याधिकारी भरद्वाजनामा ऋषिः ज्ञानसहकृतपतिधर्मोपदेष्टारं शिवाचार्यं स्कन्दस्वामिनं पृष्टवानित्यर्थः ।

किं किमिति ?. एवं—इत्थं भवादृशानां—भवानिव दृश्यन्ते इति भवादृशाः तेषां भवादृशानां, "त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रेण कञ्प्रत्ययः । भवत्सदृशानां वीरादिचतुर्गोत्रिपुरुषाणां स्कन्दोऽपि पञ्चमो गोत्रपुरुषः । तदुक्तं पाशुपततन्त्रे—

ईशानमुखसंजाता वीरशैवा महौजसः ।
वीरो नन्दी तथा भृङ्गी वृषभस्कन्द एव च ॥

इति । तस्मात् तत्सादृश्यं तेषु वक्तुं शक्यते । स्कन्दभिन्नत्वे सति स्कन्दगतेशानमुखसंजाततत्वादिधर्मवत्वस्य सत्वात् ॥

कथंभूतानां परमशिवभक्तानाम् ? शिवे स्वप्रकाशताशक्तिविशिष्टे भक्ता अनुरागयुक्तास्त्यक्तदेहाद्यभिमाना ये सन्ति ते शिवभक्तास्तेषु पारम्यं च शिरोव्रतं पाशुपतव्रतात्याश्रमव्रतशाम्भवव्रतशब्दितयावज्जीव लिं

धारणात्मकः हाक्रतयुक्तत्वं । तथा च परमशिवभक्ता लिंगधारणशालिनस्त एव वीरादयो वीरशैवास्तेषां सिद्धान्तं साधनसाध्यरूपं लिंगांगसामरस्य शक्तिविशिष्टाद्वैतं सर्वे जनाः कुतः कस्मात्कारणान्न विदन्ति न जानन्ति। सकलमानवानां सिद्धान्तज्ञानाभावे को हेतुस्तं वदेति प्रष्टुराशयः ॥

तस्मै स होवाच स्कन्दः भरद्वाज शृणु नापक्वचित्ता
विदन्ति साम्बं देवं सर्वदेवप्रकृष्टं शिवं वरेण्यम् ।
पक्वचित्ताः शिवस्य प्रसादतो ज्ञानमात्राद्विदन्ति ॥ २ ॥

तस्मै भरद्वाजाय स्कन्दो गुरुरुवाच ह प्रोक्तवान् । किमिति प्रोक्तवानित्यात्राह—भरद्वाज शृणु इत्यादिना। अत्र संबुद्धिरवधानसम्मुखीकरणार्था । शिवतत्त्वस्य लिंगांगसामरस्यबोधकपञ्चाक्षरमन्त्रघटकत्वात् । तत्सामरस्यरूपसिद्धान्तज्ञाने शिवतत्त्वज्ञानस्य हेतुत्वात् शिवतत्त्वमेवादौ निरूपयति भगवान्स्कन्दः—साम्बमित्यादिना ।

नापक्वेति अपक्वचित्ताः पक्वं शिवदीक्षासंस्कारेण परिपक्वं चित्तमन्तःकरणं येषां ते पक्वचित्ताः । संस्कृता अप्राकृता वीरशैवास्ते न भवन्ति इत्यपक्वचित्ताः असंस्कृताः प्राकृता जनाः इत्यर्थः। 'अतप्ततनुर्न तदामोऽश्नुते' इतिश्रुतेः। साम्बं अम्बया सकलजगदण्डपिण्डप्रसवित्र्या स्वाभाविकचिच्छक्तिरुपया सह अविनाभावेन संबन्धेन वर्तत इति साम्बस्तमित्यर्थः । 'परास्य शक्तिः विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति । 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति च श्रुतेः ।

मं शिवमयति गच्छत्यविनाभावसंबन्धेन वर्तते इति मायाशब्दार्थः । न तु या मा सा मायेत्यर्थः । 'एक एव हि रुद्रो न द्वितीयाय तस्थे'

'आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्रभागः सह स्वस्राम्बिकया तं जुषस्व भेषजं'। 'गवेश्वाय पुरुषाय भेषजं अथोऽस्मभ्यं भेषजं सु भेषजम्' इति यजुःश्रुत्या सहजसिद्धाम्बिकापदवाच्यशक्तिवैशिष्ट्यस्यावगमाच्च। स्वाभाविकशक्तिविशिष्टमेव ब्रह्म निर्गुणनिष्कलपरशिवलिंगरूपं साम्बपदेनोक्तम्।

न त्वद्वैतिनामिव त्रैकालिकनिषेधप्रतियोगिमायोपाधिकेश्वररूपं ब्रह्म। तस्य सद्भावे प्रमाणाभावात्। वेदान्तादेः प्रमाणत्वे ब्रह्मवत्प्रमाणस्य सत्यत्वे द्विसत्यत्वप्रसंगात् अद्वैतहानिर्न हिं यत्प्रमाणं तत्कदाप्यप्रमाणं भवितुमर्हति। न हि लोकायतिकं विना देहात्मप्रत्ययस्य प्रामाण्यं मन्यते कोऽप्यास्तिकः। लोकायतिकस्तु तस्य सदैव प्रामाण्यं मन्यत एव। तस्माद्देहात्मप्रत्ययस्य सदैवाप्रामाण्यात् तद्दृष्टान्तानुरोधेन वेदान्तादिशास्त्रस्याऽपि सदैवाप्रामाण्य प्रसंगात्। इष्टापत्तौ नास्तिक्यापत्तेः तस्मान्न मिथ्यामायाशक्तिविशिष्टेश्वरः साम्बपदेनोक्तः।

नाप्यत्र कार्यकोटिप्रविष्टस्य रुद्रस्य साम्बपदवाच्यत्वम्। अग्निमसर्व देवप्रकृष्टत्वविशेषणानौचित्यात्।

यद्यपि सर्वविष्णवादिदेवप्रकृष्टत्वं तस्याऽपि। तथाऽपि न 'ऊर्ध्वाय नमः' 'ऊर्ध्वलिंगाय नमः' 'शिव एव केवलः' 'शिवमद्वैतं चतुर्थम्' 'सर्वगतः शिवः' इत्यादिश्रुतिप्रतिपाद्यात् पराहन्तामयज्ञानात्मकचिच्छक्तिविशिष्टात् परशिवलिंगात् प्रकृष्टत्वं वक्तुं युज्यते। सर्वदेवप्रकृष्टत्व विश्वाधिकत्वविशेषणानुरोधेन सूक्ष्मशक्तिविशिष्टनिर्गुणनिष्कलपरशिवलिंगमेव साम्बपदेनोक्तमिति बाढं जानीमः।

क्रीडाशक्तिविशिष्टत्वात् देवमिति विशेषणं शिवस्य। 'तं देवतानां परमं च दैवतम्' इति 'तस्माद्देवः शिवः स्मृतः' इति च शिवेदेवशब्दप्रसिद्धिरप्यस्ति।

तस्मिन् सर्वदेवप्रकृष्टत्वमाह—सर्वदेवप्रकृष्टमिति । साम्बस्य त
मुक्तिप्रदत्वाभावात् ।

ऐश्वर्यमीश्वरादिच्छेन्मुक्तिमिच्छेज्जनार्दनात् ।

इति स्मृतेः कथमाह तत् यस्सर्वोत्तमपुरुषार्थप्रदः स एव सर्वोत्कृ इति
इति युक्तं पश्याम इति चेन्न । श्रुतिस्मृत्योः विरोधे विरोधाधिकरणन्याये
स्मृतेः दुर्बलत्वात् । सर्वदेवप्रकृष्टत्वेन शिवस्यैव मुक्तिप्रदत्वं वाच्यम्
श्रुत्यन्तराणि च शिवस्य मुक्तिप्रदत्वं घोषयन्ति । 'ज्ञात्वा शिवं शा
मत्यन्तमेति' 'ईशं ज्ञात्वा अमृता भवन्ति' 'शिव एको ध्येयः शिवङ्क
सर्वमन्यत्परित्यज्य' 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । त
शिवमविज्ञाय दुःखस्यान्तो भविष्यति' इति । तस्मात् न साम्बशिवेतर
मुक्तिप्रदत्वम् ।

इत्थं च साम्बः सर्वदेवप्रकृष्टः मुक्तिप्रदत्वात् । यन्नैवं तन्नैवं य
पशुः । इत्यनुमानमपि तस्य सर्वदेवप्रकृष्टत्वे प्रमाणमनुसन्धेयम् ।—
भवता हरदत्ताचार्येण सगुणनिर्गुणसाधारण्येनापि पशुपतिमुद्दिश्य सर्व
कृष्टत्वं साधितं पञ्चश्लोक्यां 'गायत्र्या बोधितत्वात्' इत्यादिसद्धेतु संदो
तत एव विस्तरतोऽवगन्तव्यम् ।

एतेन — अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।
इत्यादिकं प्रमाणत्वेन परिगृह्य ब्रह्मविष्णुरुद्राणां तारतम्यप्रतिपादन
दोषावहत्वात साम्यं प्रतिपत्तव्यमित्युक्तमपि निरस्तं । श्रुत्यन्तरेऽपि शि
प्रस्तुत्य 'न तत्समश्चाप्यधिकश्च दृश्यते' इति शिवसाम्यादेर्निषिद्धत्वा
निषिध्यते चादित्यपुराणे शिवस्येतरदेवसाम्योक्तिः ।

विश्वेश्वरमुमाकान्तं विश्वान्तर्यामिणं शिवम् ।
न ब्रह्माद्यैः समं ब्रूयाच्छक्तिमिश्चापि पार्वतीम् ॥

इत्यु
सांब

'वि

ब्रूयाद्यदि समं शम्भुं ब्रह्मविष्ण्वादिभिः सुरैः ।
यः कश्चित्तमसाविष्टः कदाचिन्नैव तं स्पृशेत् ॥
सर्वस्मादधिकं ब्रूयाद्भगवन्तमुमापतिम् ।

इति । शिवं स्वप्रकाशं 'वश कान्ताविति धातोः' शिवशब्दस्य निष्पत्तिः ।

हिंसिधातोर्स्सिंहशब्दो वशकान्तौ शिवः स्मृतः ।
वर्णव्यत्ययतस्सिद्धः पश्यकः कश्यपो यथा ॥

इत्युक्तेः, अतिशुद्धत्वादाश्रितशिवदत्वात् सर्वसमत्वात् स्वजनार्थसिद्धिदत्वाच्च सांब एव शिव इत्युच्यते । तदुक्तं शिवपुराणे—

अनादिमलसंश्लेषप्रागभावात्स्वभावतः ।
अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते ॥

अथवाशेषकल्याणगुणैकघन ईश्वरः ।
आश्रितात्यन्तशिवदः शिव इत्युच्यते बुधैः ॥

कर्णपर्वणि—

समा भवन्ति ते सर्वे दानवा मानवाश्च ये ।
शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे स्मृतम् ॥

अनुशासनपर्वणि —

स मेधयति यन्नित्यं सर्वार्थानामुपक्रमे ।
शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ॥

इति । श्रुतिष्वपि शिवनामप्रसिद्धिरस्त्येव । 'शिव एव केवलः' 'शिवमद्वैतं' 'शिवं प्रशान्तममृतं ब्रह्मयोनिम्' इति ॥

किञ्च वैदिकैश्शिवशब्द आशास्यमानो दृश्यते । 'शिवा ऋतवः सं
शिवा ओषधयः सन्तु शिवा वनस्पतयः सन्तु अहोरात्रे शिवे स्यातां स्व
शिवं कर्मास्तु' इति परममङ्गलवाचकत्वात् प्रयाणकाले यमभटकटुभाषणे
ज्जृम्भितसकलभयापहारकत्वाच्च सर्वस्मरणीयशिवनामेदं सांबस्य प्रसिद्धमेव

शिवलक्षणं चोक्तमन्यत्र—

एक एव शिवः साक्षाच्चिदानन्दमयो विभुः ।
निर्विकल्पो निराकारो निर्गुणो निष्प्रपंचकः ॥

अस्ति कश्चिदपर्यासरमणीयगुणाश्रयः ।
महामायाञ्जनाजालव्यतीततनुरीश्वरः ॥

जन्ममृत्युजरामोहकामक्रोधा भवोद्भवाः ।
न विद्यन्ते यतस्तस्माच्चैवं शिवपदं ततः ॥

शिवं परात्परं सूक्ष्मं नित्यं सर्वगमव्ययम् ॥
अनिन्दितमनौपम्यमप्रमेयमनामयम् ।

शुद्धत्वाच्छिवमित्याहुः परादूर्ध्वं परात्परम् ।
व्योमातीततया सूक्ष्मं नित्यं कारणशून्यतः ॥

व्याप्त्या सर्वगतं प्रोक्तमक्षीणत्वेन चाव्ययम् ।
अनिन्दितं निर्मलत्वादसादृश्यादनौपमम् ॥

प्रमाणादतिरिक्तत्वादप्रमेयमिति स्मृतम् ।
अनामयं निर्गुणत्वादेवंलक्षणवांश्शिवः ॥

इति । तमेतं सांबं शिवमेवोपासीत सर्वदेवपदोत्कृष्टफलाय । अपकृ
देवोपासने अपकृष्टफलाप्तेः । 'यो यद्यथोपास्ते तत्तदेव भवति' इति श्रु

सांबेतरदेवानामप्रकृष्टत्वहेतुका स्वातन्त्र्यात् । तद्धेतुकभयादिमत्वस्याप्यनुमेयत्वात् । अभयात्मकमोक्षाभावात् । स्वयं बद्धः कथमन्यान्मोचयति स्वयं जलह्रदमग्नः कथमन्यान् तारयतीतिन्यायेन देवान्तरस्य तारकत्वाभावात्। मुमुक्षूपास्यत्वं सांबस्यैवेत्याशयेनाह—वरेण्यमिति ।

वरेण्यं वरणीयं सर्वदेवदानवादिभिरुपासनीयमित्यर्थः । 'शिव एको-ध्येयः' इतिश्रुतेः । न विदन्ति न जानन्ति । तेषां श्रीगुरुकृतदीक्षात्रय-विरहात् चित्तशुद्ध्यभावात् । स्वात्मैक्येन नावगच्छन्तीत्यर्थः । पक्व-चित्ताः शिवदीक्षाविगलितमलविलासास्तु वीरशैवाश्शिवस्य उक्तलक्षणस्य भक्त चिन्तामणेः प्रसादतः—

द्वितीयमपि शिष्यस्य गुरुवाक्यस्य पालनात् ।

इत्युक्तप्रकारेण दीक्षागुर्वाज्ञावचनपालनसमुदितशिवभक्तिशिवव्रतशिवार्चनाद्या-चरणातिशयविजृम्भितादनुग्रहादित्यर्थः । ज्ञानमात्रात् तादृशशिवानुग्रहा-विर्भूतपराहन्तामयशुद्धविद्यारूपात् लिङ्गाङ्गसामरस्यविषयादेव विदन्ति स्वस्वात्मानं शिवं पश्यन्ति । मुक्ता भवन्तीत्यर्थः ॥ २ ॥

शिवनिन्दायां महान्प्रत्यवाय इत्याह—

विश्वाधिकं शंकरं ये प्रमूढा
हीनं विष्णोर्ब्रह्मणो वा विदन्ति ।
न संसारात्प्रमुच्यन्ते कदाचि-
च्छतैःकल्पैः कोटिभिर्वात्तदोषाः ॥ ३ ॥

विश्वाधिकमिति । ये मानवा विश्वाधिकं विश्वनियामकं विश्वान्त-र्यामित्वेन तत्तत्कर्मानुगुणशुभाशुभफलभोजयितृत्वेन विश्वनिमित्तकारणत्वेन च विश्वोपादानकारणत्वेन च विश्वाधिको विश्वात्मकः शिव एव । 'विश्वा-

तस्मिन् सर्वदेवप्रकृष्टत्वमाह—सर्वदेवप्रकृष्टमिति । साम्बस्य त
मुक्तिप्रदत्वाभावात् ।

ऐश्वर्यमीश्वरादिच्छेन्मुक्तिमिच्छेज्जनार्दनात् ।

इति स्मृतेः कथमाह तत् यस्सर्वोत्तमपुरुषार्थप्रदः स एव सर्वोत्कृ
इति युक्तं पश्याम इति चेन्न । श्रुतिस्मृत्योः विरोधे विरोधाधिकरणन्याये
स्मृतेः दुर्बलत्वात् । सर्वदेवप्रकृष्टत्वेन शिवस्यैव मुक्तिप्रदत्वं वाच्यम्
श्रुत्यन्तराणि च शिवस्य मुक्तिप्रदत्वं घोषयन्ति । 'ज्ञात्वा शिवं शान्ति
मत्यन्तमेति' 'ईशं ज्ञात्वा अमृता भवन्ति' 'शिव एको ध्येयः शिवङ्क
सर्वमन्यत्परित्यज्य' 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । त
शिवमविज्ञाय दुःखस्यान्तो भविष्यति' इति । तस्मात् न साम्बशिवेतर
मुक्तिप्रदत्वम् ।

इत्थं च साम्बः सर्वदेवप्रकृष्टः मुक्तिप्रदत्वात् । यन्नैवं तन्नैवं य
पशुः । इत्यनुमानमपि तस्य सर्वदेवप्रकृष्टत्वे प्रमाणमनुसन्धेयम् ।—
भवता हरदत्ताचार्येण सगुणनिर्गुणसाधारण्येनापि पशुपतिमुद्दिश्य सर्वदे
कृष्टत्वं साधितं पञ्चश्लोक्यां 'गायत्र्या बोधितत्वात्' इत्यादिसद्धेतु संदो
तत एव विस्तरतोऽवगन्तव्यम् ।

एतेन — अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।
इत्यादिकं प्रमाणत्वेन परिगृह्य ब्रह्मविष्णुरुद्राणां तारतम्यप्रतिपादन
दोषावहत्वात् साम्यं प्रतिपत्तव्यमित्युक्तमपि निरस्तं । श्रुत्यन्तरेऽपि शि
प्रस्तुत्य 'न तत्समश्चाप्यधिकश्च दृश्यते' इति शिवसाम्यादेर्निषिद्धत्वा
निषिध्यते चादित्यपुराणे शिवस्येतरदेवसाम्योक्तिः ।

विश्वेश्वरमुमाकान्तं विश्वान्तर्यामिणं शिवम् ।
न ब्रह्माद्यैः समं ब्रूयाच्छक्तिमिश्चापि पार्वतीम् ॥

ब्रूयाद्यदि समं शम्भुं ब्रह्मविष्ण्वादिभिः सुरैः ।
यः कश्चित्तमसाविष्टः कदाचिन्नैव तं स्पृशेत् ॥
सर्वस्मादधिकं ब्रूयाद्भगवन्तमुमापतिम् ।

इति । शिवं स्वप्रकाशं 'वश कान्ताविति धातोः' शिवशब्दस्य निष्पत्तिः ।

हिंसिधातोस्सिंहशब्दो वशकान्तौ शिवः स्मृतः ।
वर्णव्यत्ययतस्सिद्धः पश्यकः कश्यपो यथा ॥

इत्युक्तेः, अतिशुद्धत्वादाश्रितशिवदत्वात् सर्वसमत्वात् स्वजनार्थसिद्धिदत्वाच्च सांब एव शिव इत्युच्यते । तदुक्तं शिवपुराणे—

अनादिमलसंश्लेषप्रागभावात्स्वभावतः ।
अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते ॥

अथवाशेषकल्याणगुणैकघन ईश्वरः ।
आश्रितात्यन्तशिवदः शिव इत्युच्यते बुधैः ॥

कर्णपर्वणि—

समा भवन्ति ते सर्वे दानवा मानवाश्च ये ।
शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे स्मृतम् ॥

अनुशासनपर्वणि—

स मेधयति यन्नित्यं सर्वार्थानामुपक्रमे ।
शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ॥

इति । श्रुतिष्वपि शिवनामप्रसिद्धिरस्त्येव । 'शिव एव केवलः' 'शिवमद्वैतं' 'शिवं प्रशान्तममृतं ब्रह्मयोनिम्' इति ॥

किञ्च वैदिकैश्शिवशब्द आशास्यमानो दृश्यते । 'शिवा ऋतवः सं
शिवा ओषधयः सन्तु शिवा वनस्पतयः सन्तु अहोरात्रे शिवे स्यातां स्वि
शिवं कर्मास्तु' इति परममङ्गलवाचकत्वात् प्रयाणकाले यमभटकटुभापणे
ज्जृम्भितमकलभयापहारकत्वाच्च सर्वस्मरणीयशिवनामेदं सांबस्य प्रसिद्धमेव

शिवलक्षणं चोक्तमन्यत्र —

एक एव शिवः साक्षाच्चिदानन्दमयो विभुः ।
निर्विकल्पो निराकारो निर्गुणो निष्प्रपंचकः ॥

अस्ति कश्चिदपर्याप्तरमणीयगुणाश्रयः ।
महामायाञ्जनाजालव्यतीततनुरीश्वरः ॥

जन्ममृत्युजरामोहकामक्रोधा भवोद्भवाः ।
न विद्यन्ते यतस्तस्माच्चैवं शिवपदं ततः ॥

शिवं परात्परं सूक्ष्मं नित्यं सर्वगमव्ययम् ॥
अनिन्दितमनौपम्यमप्रमेयमनामयम् ।

शुद्धत्वाच्छिवमित्याहुः परादूर्ध्वं परात्परम् ।
व्योमातीततया सूक्ष्मं नित्यं कारणशून्यतः ॥

व्याप्त्या सर्वगतं प्रोक्तमक्षीणत्वेन चाव्ययम् ।
अनिन्दितं निर्मलत्वाद्सादृश्यादनौपमम् ॥

प्रमाणादतिरिक्तत्वादप्रमेयमिति स्मृतम् ।
अनामयं निर्गुणत्वादेवंलक्षणवांश्शिवः ॥

इति । तमेतं सांबं शिवमेवोपासीत सर्वदेवपदोत्कृष्टफलाय । अपकृ
देवोपासने अपकृष्टफलापत्तेः । 'यो यद्यथोपास्ते तत्तदेव भवति' इति श्रु

सांबेतरदेवानामप्रकृष्टत्वहेतुका स्वातन्त्र्यात् । तद्धेतुकभयादिमत्वस्याप्यनुमेयत्वात् । अभयात्मकमोक्षाभावात् । स्वयं बद्धः कथमन्यान्मोचयति स्वयं जलह्रदमग्नः कथमन्यान् तारयतीतिन्यायेन देवान्तरस्य तारकत्वाभावात्। मुमुक्षूपास्यत्वं सांबस्यैवेत्याशयेनाह—वरेण्यमिति ।

वरेण्यं वरणीयं सर्वदेवध्यानवादिभिरुपासनीयमित्यर्थः । 'शिव एको-ध्येयः' इतिश्रुतेः । न विदन्ति न जानन्ति । तेषां श्रीगुरुकृतदीक्षात्रय-विरहात् चित्तशुद्ध्यभावात् । स्वात्मैक्येन नावगच्छन्तीत्यर्थः । पक्व-चित्ताः शिवदीक्षाविगलितमलविलासास्तु वीरशैवाश्शिवस्य उक्तलक्षणस्य भक्त चिन्तामणेः प्रसादतः—

द्वितीयमपि शिष्यस्य गुरुवाक्यस्य पालनात् ।

इत्युक्तप्रकारेण दीक्षागुर्वाज्ञावचनपालनसमुदितशिवभक्तिशिवव्रतशिवार्चनाद्या-चरणातिशयविजृम्भितादनुग्रहादित्यर्थः । ज्ञानमालात् तादृशशिवानुग्रहा-विर्भूतपराहन्तामयशुद्धविद्यारूपात् लिङ्गाङ्गसामरस्यविषयादेव विदन्ति स्वस्वात्मानं शिवं पश्यन्ति । मुक्ता भवन्तीत्यर्थः ॥ २ ॥

शिवनिन्दायां महान्प्रत्यवाय इत्याह—

विश्वाधिकं शंकरं ये प्रमूढा
हीनं विष्णोर्ब्रह्मणो वा विदन्ति ।
न संसारात्प्रमुच्यन्ते कदाचि-
च्छतैःकल्पैः कोटिभिर्वात्तदोषाः ॥ ३ ॥

विश्वाधिकमिति । ये मानवा विश्वाधिकं विश्वनियामकं विश्वान्त-र्यामित्वेन तत्तत्कर्मानुगुणशुभाशुभफलभोजयितृत्वेन विश्वनिमित्तकारणत्वेन च विश्वोपादानकारणत्वेन च विश्वाधिको विश्वात्मकः शिव एव । 'विश्वा-

धिको रुद्रो महर्षिः' 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतिभ्यः सांबस्यैव शिवस्य विश्वाधिकत्वविश्वात्मकत्वयोरवधारणात् ।

अथ च शङ्करं शं सुखं परमानन्दं मोक्षं करोतीति शङ्करः । तमेतं शङ्करं विष्णोः केशवात् दशावतारेष्वपि कृतशिवार्चनात्, ब्रह्मणो वा शिरश्छेदितैकमस्तकात् चतुर्मुखादपि हीनं न्यूनमपकृष्टमित्यर्थः । विदन्ति जानन्ति ते प्रमूढाः प्रकर्षेण मूर्खाः ज्ञानलवदुर्विदग्धाः आत्तदोषाः शिवनिन्दापादितप्रत्यवायास्सन्तः, कदाचिच्छतैः कल्पैः कोटिभिर्वा असंख्य कल्पपर्यन्तमित्यर्थः। संसारात् अज्ञाननिबन्धात् न मुच्यन्ते न मुक्ता भवन्तीत्यर्थः ।

सर्वज्ञत्वाद्यनन्तकल्याणगुणरत्नरत्नाकरस्य शिवरुद्रमहेशमहादेवाद्यनन्तपर्यायनामविख्यापितनिस्सीममहिमविलासस्य सकलभुवनसृष्टिस्थितिसंहारकारिगुणमूर्तिनियामकस्य साम्बस्य शिवस्य विश्वाधिकत्वे न केऽपि निगमागमस्मृति पुराणेतिहासप्रामाण्यवादिनो विवदन्ति । तथाऽपि ये केचिद्विवदमाना अनालोचितनिगमागमादिशास्त्रगन्धाः पण्डितमानिनः विश्वाधिकमपि शङ्करं न्यूनताबुध्या निन्दन्ति तेऽत्यन्तमूढा मुक्तिमार्गविधुराः संसारकारागृहतमःपरिपीड्यमाना भवन्तीत्याशयः । उक्तं च कौर्मे—

य: सर्वभूतविनुतं विश्वेशं तु विनिन्दति ।
न तस्य निष्कृतिः शक्या वक्तुं वर्षशतैरपि ॥

इति । उक्तं च शिवरहस्ये —

शिवं विश्वाधिकं साम्बमनन्यसदृशं प्रभुम् ।
योऽन्यथा मनुते मोहात् स भवेत्पुल्कसाधमः ॥

विप्रा विश्वाधिको रुद्रो यदि विष्णुसमस्तदा ।
श्रुतिर्विश्वाधिको रुद्रो इत्येषा बाधिता भवेत् ॥

इति । उक्तं च स्कान्दे—

ये मां ब्रह्मादिभिस्तुल्यं ये त्वां लक्ष्म्यादिशक्तिभिः ।
गुरुं ये प्राकृतैस्तुल्यं संस्मरन्त्यल्पबुद्धयः ॥
तेषां पापानि नश्यन्ति शिवरात्रिप्रजागरात् ॥

इति । तथा चात्रात्तदोषा इत्यनेन यः कोऽपि पूर्वार्जितपापातिशयासादितशिवनिन्दात्मकदोषदुष्टमतिस्सन् सर्वदेवप्रकृष्टमपि शिवं विष्ण्वादिदेवापकृष्टं मन्यते, सः दुःसहदुःखातिशयभोक्ता भवतीति स्फुटीकृतम् । उक्तं च हरदत्ताचार्येणापि 'ईशनिन्दायुक्तेर्दोषावहत्वात्' इति ॥ ३ ॥

दृष्टान्तमुखेन शिवापकृष्टत्वबुद्धेर्महद्दुःखमाह —

**यथा राज्ञि कुर्वन्नमात्यबुद्धिं देही विन्देद्बाधामस्माद्धि नष्टः । सत्यादिरूपं शिवमेवं विदानो विष्ण्वादिबुद्धया हीयतेऽज्ञानवशात् ॥ ४ ॥**

यथेति । यथा देही कश्चिद्राज्ञि सार्वभौमे वस्तुतः सर्वामात्यादिप्रजानाथे अमात्यबुद्धिं अमात्यः सचिव इति बुद्धिं भावनां कुर्वन् 'नायं राजा किंवमात्यः अन्यस्य कस्यचिद्राज्ञो भृत्यः' इति स्वदुरदृष्टवशान्मत्वा भृत्योचितक्रियाश्चाचरन् सन् तस्माद्राज्ञो विनष्टः विशेषेण नष्टः तदपहृतधनधान्याद्यैश्वर्यः सन् बाधां पीडां विन्दते लभते । दार्ष्टान्ते योजयति—सत्यादीति ।

एवं तथा सत्यादिरूपं सच्चिदानन्दात्मकभावप्राणेष्टलिङ्गरूपं भावमनोदृग्ग्राह्यं शिवमुक्तलक्षणं विष्ण्वादिबुद्धया विष्णुरादिरेषां ते विष्ण्वादयः विष्णु ब्रह्माद्याः कार्यकोटिप्रविष्टाः सृष्ट्यादिनियमिताः वस्तुतः शिवामात्यास्तेषां

बुद्धया उत्कृष्टज्ञानेन विष्णुर्विरिञ्चिरुत्कृष्टः इति भ्रान्त्या अज्ञानवशात् मायापाशवशात् विदानः अपकृष्टज्ञानानः पुरुषः हीयते परमेश्वरेण हीनः क्रियते घोरापारनिस्सारसंसारतापत्रयानलदन्दह्यमान एव क्रियते इत्यर्थः ।

लोके यथा प्रभुभृत्ययोर्वैपरीत्यग्रहणप्रयुक्तवैपरीत्याचरणशीलस्य महद् दुःखं तथा सर्वलोकप्रभुशिवतदमात्यविष्ण्वादिदेवेषु वैपरीत्यग्रहणप्रयुक्तवैपरीत्याचरणशीलस्य दुःस्सहघोरसांसारिकं महद्दुःखं भवतीत्यर्थः ॥ ४ ॥

ईश्वरोत्कृष्टत्वबुद्धेः पापदाहकत्वं सदृष्टान्तमुक्त्वा तस्याः शिवज्ञानदानक्षमत्वात् तद्वतः पुरुषस्य संसारे पतनाभावमाह—

महानग्निः काष्ठमार्द्रं शुष्कं कृत्वा दहेदीश्वरोत्कृष्टबुद्धिर्दहेत्पापान्याशु विज्ञानदानात् न संसारे प्रच्यवते कदाचित् ॥ ५ ॥

महानिति । महान् प्रदीप्तः अग्निर्वह्निः दवाग्निरित्यर्थः । आर्द्रं काष्ठं शुष्कं प्रथमं नीरसं कृत्वा यथा दहेद्भस्मसात्कुरुते तथैवेश्वरोत्कृष्टबुद्धिः ईश्वरः शिवः उत्कृष्टः सर्वदेवोत्तमः इति बुद्धिर्ज्ञानं यस्य वर्तते तस्य पापानि त्रिकरणजातानि दुरितानि विज्ञानदानात् विशेषेण लिङ्गाङ्गसामरस्यज्ञानदानद्वारा आशु सत्वरं दहेद्दग्धानि करोतीत्यर्थः ।

किञ्च तं कदाचिदपि संसारे दुस्सहदुःखात्मके न प्रच्यवते न प्रच्युतं पतितं करोतीत्यर्थः । प्रदीप्तदवाग्निसदृशसर्वोत्तमशिवबुद्धया सरसकाष्ठसदृश दुरितक्षयो जायते इति भावः ।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।

इति श्रुत्यन्तराच्च । अत्र सांबस्य—शिवस्य ईश्वरशब्दप्रयोगान्न तदितरदेवा ईश्वरशब्दवाच्य इति स्फुटम् । उक्तञ्च तत्रभवता हरदत्ताचार्येण—

मन्त्रार्थवादविधिभिर्बहुधा विभक्तो
यःशब्दराशिरनपेक्षितया प्रमाणम् ।
सोऽयं विमत्सरविमृष्टपदार्थतत्त्वो
वेदः प्रकाशयति केवलमीश्वरं त्वाम् ॥

इति । 'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्'

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'

इत्याद्यनन्तश्रुतिस्मृतिषु शिवस्यैवेश्वरशब्दप्रयोगसद्भावेऽपि लोके ईश्वरदेवालयमित्युक्ते बालिशैरपि शिवालयस्य ज्ञायमानत्वेऽप्यहो केचिदन्यमीश्वरं जानन्ति तेषां महान् भ्रमः ॥ ४ ॥

नेक्षेत पूजावेलायां नरं वत्स वहिष्कृतं ।
दधीचिना गौतमेन ये शप्ता ब्राह्मणाधमाः ॥

कलाववतरिष्यन्ति निन्दकास्ते वहिष्कृताः ।
ब्रह्महत्यासुरापानस्वर्णस्तेयकृतः पुरा ॥

वहिर्नरा भविष्यन्ति कलावीश्वरनिन्दकाः ॥

इत्युक्तप्रकारेण पातकिनः कस्यच्छिवनिन्दायां शिवधर्मनिन्दायां मतिरुदेति न तु शिवे शिवधर्मे श्रद्धा जायते इति शिवनिन्दासादृश्यं भस्मत्रिपुण्ड्ररुद्राक्षधारणनिन्दायाः प्रतिपाद्यते—

महादेवे त्रिपुण्ड्रस्य धारणे भस्मकुण्ठने ।
पुण्यलेशविहीनस्य श्रद्धा नैव प्रजायते ॥ ६ ॥

महादेव इति । महादेवे महान् पूजार्हः देवः शिवस्तस्मिन् त्रिपुण्ड्रस्य मध्यमांगुलित्रयेण धार्यमाणस्य भस्मरेखात्रयस्य धारणे मस्तकादि-

विहितस्थानेषु धारणे, भस्मकुण्ठने शैवमुद्रापञ्चकान्तर्गतायां भस्मघुण्टिकाया पुण्यलेशविहीनस्य सुकृतलवरहितस्य दुष्कृतिनः श्रद्धा दृढतरविश्वासः नैव प्रजायते नैवोत्पद्यते ॥ ६ ॥

पापपूर्णस्य मर्त्यस्य त्रिपुण्ड्रोद्धूलने शिवे।
रुद्राक्षधारणे द्वेषः स्वत एव प्रजायते ॥ ७ ॥

पापपूर्णस्येति। पापेन दुरितेन पूर्णस्य मर्त्यस्य नरस्य त्रिपुण्ड्रोद्धूलने तिर्यक्त्रिपुण्ड्रोपलक्षितभस्मोद्धूलने भस्मोद्धूलनस्य पृथक्कर्मत्वात् शिवे शिव-लिङ्गे इष्टादिरूपे रुद्राक्षधारणे रुद्राक्षाणां संख्यानियमेन शिखामस्तकादिषु वक्ष्यमाणस्थानेषु धारणे द्वेषः वैरबुद्धिः स्वत एव प्रजायते। शिवनिंदा-समुदितदुरन्तदुरितसञ्जनितदुस्सहदुःखभोगपर्यन्तं शिवे इव शिवधर्मे द्वेष एवो-त्पद्यते न त्वनुराग इत्यर्थः।

अत्र शिवमहादेवशब्दितलिंगप्रतियोगिकधार्यमाणभस्मरुद्राक्षानुयोगिक सादृश्यस्य गम्यमानत्वात् तद्घटकभेदप्रतियोगितया लिंगधारणमपि सिद्धं भवति। न चान्तर्धारणमेव सिद्ध्यतीति वाच्यम्। यत्प्रतियोगिकसादृश्यवद्यत् श्रूयते तत्प्रतियोगिकसादृश्यवत्तदपि गम्यते इति नियमात्। उपमानोपमेययोस्तुल्य वित्तिवेद्यतया भासमानत्वात्। उपमेयभूतभस्मरुद्राक्षयोर्बहिःशरीरधार्यत्वेनो-पमानस्यापि शिवलिङ्गस्य तथात्वात्। वाक्पटुत्वे बृहस्पतिरित्यादाविवशब्दं विनापि सादृश्यस्य प्रतीयमात्वादत्रापि शिवे इवेतीवशब्दाभावेऽपि शिव सादृश्यं भस्मत्रिपुण्ड्रादौ वक्तुं युज्यत एव। अलमत्र साहसेन लिङ्गधारणस्याग्रे स्फुटं वक्ष्यमाणत्वात् ॥ ७ ॥

देवोऽन्यः श्रीमहादेवादधिकोऽस्तीति यो वदेत्।
स चण्डालः सत्यमेव जन्मजन्मान्तरेष्वपि ॥

इति शिवरहस्याद्युक्तप्रकारेण शिवनिन्दकं क्रिमिकीटाद्यनन्तयोनिषु जनयित्वा तत्तज्जन्मोचितभोगांश्च भोजयित्वा शिवः प्रसीदतीत्याह—

जन्मान्यनन्तानि वितीर्य भूयः
शिवप्रसादाद्धृतपुण्यवेषः ।
शिवे भक्तिं प्राप्य तद्भक्तसङ्गा-
न्न संसृतौ घोरदुःखात्प्रमज्जेत् ॥ ८ ॥

जन्मानीति । अनन्तानि अनेकानि जन्मानि क्रिमिकीटपतङ्गपश्वा-दिनानाहीनयोनिजननानीत्यर्थः । भूयः बहुवारं वितीर्य दत्त्वा स्वनिन्दापादित पापातिशयप्रशमनाय श्रीसांबः शिव एव पातकिनं हीनयोनिषु जनयित्वा तत्तज्जन्मोचितभोगांश्च भोजयित्वा प्रसीदति । तस्माच्छिवप्रसादात् शिवस्यानु-ग्रहात् धृतपुण्यवेषः धृतः पुण्यः पवित्रः वेषः शिवलांछनात्मकः यस्य स शिवद्वेष्टा शिवे भक्तिं प्राप्य शिवद्वेषं त्यक्त्वा शिवभक्तो भूत्वा तद्भक्त सङ्गात् तस्य शिवस्य भक्तानां वीरशैवानां परमशिष्टानां सङ्गात् सहवासादिना संबन्धात् संसृतौ संसारसागरे घोरदुःखात् दुःसहदुःखात्मके जले । वचन व्यत्ययश्छान्दसः । न प्रमज्जेत् न निमज्जेत् । शिवद्वेषापादितपापातिशयफल-भोगानन्तरं शिवानुग्रहप्राप्तशिवभक्त्यतिशयार्जितदीक्षासंपन्नो भूत्वा अपार-संसारसागराधिकरणकघोरदुःखनीरे न निमग्नो भवति मुक्तो भवतीत्यर्थः ॥

विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।
तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् ॥

इत्युक्तप्रकारेण सर्वोत्तमशिवशब्दोच्चारणे महत्फलमस्तीति शिवनाम प्रशस्यते—

योऽज्ञानाद्वा शिवशब्दं गृह्णानः
पापैर्घोरैर्मुच्यते वा कदाचित् ॥ ९ ॥

य इति। यः पुरुषः अज्ञानाद्वा शिवशब्दार्थज्ञानाभावेऽपि शिवशब्दं शिव इति शब्दं परममङ्गलं नाम गृह्णानः उच्चरन् घोरैर्भयङ्करैः पापैः दुःखोत्पादकैरधर्मैः कदाचिद्वा कस्मिंश्चिदपि काले मुच्यते त्यज्यते शिवशब्दोच्चारण निरस्तघोरकलुषो भवतीत्यर्थः। उक्तञ्च शिवशब्दोच्चारणमहत्वमभियुक्तैरपि-

कुलिशं कुसुमति दहनस्तुहिनति वारान्निधिर्भुव स्थलति।
शत्रुर्मित्रति विषमप्यमृतति शिवशिवेति प्रलपतो भक्त्या ॥ इति।
शिवेति मंगलं नाम यस्य वाचि प्रवर्तते।
सप्तजन्मकृतं पापं भस्मीभवति तस्य वै ॥ इत्यप्युक्तं ॥ ९ ॥

कथं वा शिवनामनि तादृशसामर्थ्यं घोरपापशमनाय प्रायश्चित्तविधानादित्याशङ्कायामाह—

को वा वेत्ता महिमानं शिवस्य
परात्परस्य ज्ञानगुह्यस्य गुह्यम् ॥ १० ॥

को वेति। परात् जीवकोटिप्रविष्टब्रह्मादिपशुसङ्घात्। परस्य प्रकृष्टस्य ज्ञान गुह्यस्य ज्ञानस्य अशुद्धान्तःकरणजन्यस्य गुह्यः अगोचरः अविषय इत्यर्थः। गुह्य शब्दस्य रहस्यार्थकत्वात् तस्य कर्तुमकर्तुमन्यथावापि कर्तुं समर्थस्य शिवस्य गुह्यं रहस्यं दुर्विज्ञेयं महिमान महत्त्वं अघटितघटनापटीयस्त्वं को वा देवो वा दानवो वा मानवो वा वेत्ता ज्ञाता भवति। न कोऽपीत्यर्थः। तस्मात्सर्वस्वतन्त्रः शिव एव स्ववाचकशिवशब्दोच्चारणशीलस्य दुरितानि कदाचित्कृपया नाशयत्यीत्यत एव शिवशब्दघटितपञ्चाक्षरमन्त्रश्रवणमेव प्रायश्चित्तमित्युक्तं सानन्दमुनि चरिते —

'प्रायश्चित्तमभूत्तेषां मम पञ्चाक्षरश्रुतिः' इति ॥ १० ॥

सद्योजाताद्ब्राह्मणाः संभूवुः
वामदेवात् क्षत्रिया विशश्च ।
अघोराच्छूद्रास्तत्पुरुषात् शिवस्य
पञ्चात्मकस्य गणा ईशानतः स्युः ॥ ११ ॥

सद्योजातादित्यादि तत्पुरुषादित्यन्तं स्पष्टम् । पञ्चात्मकस्य पञ्च आत्मानः तनवः यस्य स पञ्चात्मकस्तस्य पञ्चब्रह्मतनोः शिवस्य ईशानतः ईशानादूर्ध्वमुखात् गणाः वीरनन्द्यादिप्रमथाः 'संख्यायां प्रमथे गणः' इत्युक्तम् । स्युः संबभूवुः ॥ २२ ॥

वीरनन्दिभृङ्गिवृषभस्कन्दाभिधानपञ्चगोत्राधिकारिणः प्रमथा ईशाना- ख्योर्ध्वमुखाविर्भूता इत्युक्त्वा तद्गोत्रजातानां लक्षणमाह—

अत्याश्रमित्वात् गणवंशजानां
लिङ्गाङ्गसङ्गिनां तत्राजन्मान्तदीक्षा ।
यथा गंगा शिवसंगात्तथैव
न सूतकं वा नाप्यशुचित्वमेषां ॥ १२ ॥

अत्याश्रमित्वादिति । गणवंशजानां वीरनन्द्यादिगणगोत्रजातान लिंगांगसंगिनां दीक्षाकाले श्रीगुरुकृतलिंगांगसामरस्यवतां वीरशैवानां अत्या- श्रमित्वात् अतिशयिताः प्रकृष्टा आश्रमाः शिवब्रह्मचर्यादयः येषां सन्तिां तेऽत्याश्रमिणः तेषां भावः अत्याश्रमित्वं 'प्रकर्षे लङ्घनेऽप्यति' इत्यमरोक्तेः । तत्र लिंगांगसंगिषु वीरशैवेषु आजन्मान्तदीक्षा जन्मनः अन्तं मरणं आजन्मान्तं मरणपर्यन्तं दीक्षा लिंगधारणात्मकमहाव्रतरूपा विहितेत्यर्थः ।

आजन्मान्तमियं दिक्षा पशुपाशविनाशिनी ।

इत्युक्तेः । इदमेव लिंगधारणमहाव्रतं मुण्डकाद्युपनिषत्सु शिरोव्रतपाशुपतव्र शांभवव्रतादिनाम्ना ब्रह्मविद्याधिकारिविशेषणतयोच्यते ।

नन्वत्राजन्मान्तदीक्षापदेन लिंगधारणदीक्षाया नित्यत्वेन स्त्रीपुरु साधारण्येनाभिहितत्वे कथं दर्शनस्पर्शनानर्हाणां रजस्वलानां प्रसूतिकास्त्री लिंगधारणलिंगपूजादिकमुपपद्यते ? तासां लिङ्गधारणादीनामत्यन्तविरुद्ध त्वात् इत्याशङ्क्य सदृष्टान्तं परिहरति—यथेति । गंगा भागीरथी शिवसंगा शिवस्य नित्यशुद्धस्य संगात् संस्पर्शात् यथा सूतकवर्जितेति शेषः । तथै वेषां लिंगांगसंगिनां वीरशैवानां स्त्रीपुरुषाणां सूतकं जननाद्युत्थं नैव संभवति तदुक्तं लिंगसारे—

यथा विश्वेशनिकटाद्गङ्गा सूतकवर्जिता ।
तथा लिंगाङ्किता भक्ताः पञ्चसूतकवर्जिताः ॥

इति । अशुचित्वमपि नैव वीरशैवानाम् । लिंगधारणमहाव्रतस्य यावज्जीव भावित्वप्रतिपादकपुराणादिवाक्यानामिदमेवाजन्मान्तदीक्षेति वाक्यं मूलम् तथैव स्कन्दपुराणादावप्युच्यते—

लिंगधारणकं नाम व्रतं माहेश्वराभिधम् ।
यावज्जीवमिदं दत्तमिष्टलिंगं समर्चयेत् ॥

इति । तथाच माहेश्वरव्रतापरपर्यायतन्महाव्रतस्य गुरुकृतलिंगधारणदीक्षासमये गुरुसम्मुखे यावज्जीवभावित्वेनारंभकरणात् । आरब्धव्रतनामांतरालिकाशौ- चादिप्रसक्तौ तत्त्यागे महाप्रत्यवायस्य निरूपितत्वात् संकल्पितव्रतभंगसंभवात् आन्तरालिकाशौचादिप्रसक्तावपि न लिंगधारणं त्यक्तव्यम् ।

ननु लिंगधारणस्याकरणे प्रत्यवायाभावात् नित्यकर्मत्वाभावात् अशौच काले कुतो न लिंगधारणं त्यक्तुं योग्यमिति चेदुच्यते ।

भक्तस्याबिभ्रतो लिंगं यावत्प्राणविधारणम् ।
श्वमांसभक्षणं तावदन्नेन रचितं भवेत् ॥
लिंगस्य धारणं यस्य स्थूलदेहे न विद्यते ।
तद्देहं निष्फलं ज्ञेयं जीवत्यक्तशरीरवत् ॥
तस्मात्तद्धारणं प्रोक्तं यावज्जीवाग्निहोत्रवत् ।
यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु ।
तथा लिंगविहीनस्तु सर्वकर्मबहिष्कृतः ॥

इति वातुलागमस्कन्दलिंगपुराणादिष्वकरणे प्रत्यवायो दृश्यते । तस्माल्लिंग धारणं नित्यकर्मेति सिद्धं ।

आजन्मांतदीक्षाया अत्रैव विहितत्त्वाच्च । लिङ्गधारणं नित्यकर्म 'विधि शिवनियोगो हि' । विध्युल्लंघने—

राजाज्ञाभंगकृन्नृणां यथा दण्डो भविष्यति ।
शिवाज्ञाभंगकृन्नृणां दण्डो हि नरकस्तथा ॥

इत्युक्तेरनिष्टापत्तेश्च ।

'प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः'

इत्युक्तप्रकारेण संकल्पितपौण्डरीकादिदीर्घसत्रदीक्षितयज्वपत्न्यास्तथाविधदीक्षा-विषये रजस्वलाद्यशौचाभाववत् यज्वनोऽपि तत्र जाताशौचाद्यभाववत्,

'यावज्जीवमिदं लिङ्गं शरीरान्न वियोजय ।

इति गुरुकृतलिंगधारणदीक्षाया यावज्जीवभावित्वेन,

नित्यं स्ववामहस्ताग्रे सावधानेन पूजयेत् ।

इति लिंगपूजायाश्च यावज्जीवभावित्वेन लिंगधारणतत्पूजादेरशौचप्रसक्
वपि कर्तव्यत्वमेव । लिंगधारणे तत्पूजायामप्यशौचविधानाभावात् । तदु
सिद्धान्तागमे—

स्वेष्टलिंगैकपूजायां नैवाशौचं विधीयते ।
पौण्डरीके रजःस्त्रीणां स्वाग्निहोत्रे यथा तथा ॥
अक्षरस्पर्शयोग्यापि यथा जिह्वा महेश्वरि ।
मंत्रोच्चारणमात्रस्य पूता भवति भूतले ॥
तथा सूतकिनः शैवाः पूजामात्रसुनिर्मलाः ।
नान्यस्पर्शानुकूलाः स्युरिति वेदानुशासनम् ॥

इति । रजस्वलानां धारणांशे परिशुद्धत्वे कर्मान्तरेऽपि परिशुद्धिः स्यादि
तुल्यमिति लिंगधारणचन्द्रिकायां ॥

'ननु तर्हि जननतदितरादिप्रयुक्तसूतकपञ्चकस्याप्यनुष्ठानं स्यात
वेदवाक्यैरेव रजस्वलादिविषये 'यदि मलवद्वासःस्यात्' इत्यनूद्य अखं
पात्रेणेति विधानात् इति चेन्न । तत्परित्यागस्यापि नियमरूपत्वेन ब्रह्मच
यतीनामसूतकमिव शावादिष्वग्निहोत्रानुष्ठानस्यार्द्रवस्त्रेणतात्कालिकशुद्धिवदि
संक्षेपः' इति क्रियासारे ॥

'न तस्य सूतकं किञ्चित्प्राणलिंगांगसंगिनः'

इत्यादि मूलमाश्रित्य शिवभक्तानां न किमपि सूतकमिति सिद्धान्तशिख
मणिव्याख्याने ।

लिंगधारणचन्द्रिकाटीकायामप्युक्तम् — 'प्रथमं त्वेतन्मते परवैरा
प्राप्तसन्यस्तशरीरवद्वास्तविकशिवमयत्वप्राप्तशरीरस्याशुचित्वमेव नास्ति मत
न्तरालंबनेन तच्छरीरस्याशुचित्वाभ्युपगमेऽपीति' ।

'केचित्तु दन्तधावनगण्डूषजलादिना पवित्रीकृतमुखस्य मन्त्रोच्चारणादौ शुद्धत्वेऽप्यन्यशरीरनिष्ठीवनादावपरिशुद्धत्ववद्धारणपूजादिविषये परिशुद्धत्वेऽपि कार्यान्तरे तदभाव इति प्राहुः' इत्येतन्मतमपि दर्शितं लिंगधारणचन्द्रिकायाम् । श्रीकरभाष्यस्य मतमप्येतदेव ; दीक्षितशरीरे शिवपूजादिनित्यकर्मावच्छेदेन शौचस्य तदितरान्यस्पर्शादिकर्मावच्छेदेनाशौचस्याभ्युपगमात् ।

अत्रास्वारस्यं सूचितं केचित्तु इत्यनेन । तद्बीजन्तु किञ्चिदंशे शौचमन्यत्राशौचमित्यत्र विनिगमनाविरह इति । न च पवित्रीकृतमुखस्य मन्त्रोच्चारणान्यनिष्ठीवनादेरिव शिवपूजाद्यन्यस्पर्शपाकादेः प्रत्यक्षलोकाचार विरोध एव विनिगमनेति वाच्यम्। शिवपूजादावपि तद्विरोधस्य संभवात् । लिंगधारणलिंगपूजादेस्त्यागप्रसङ्गात् । न च 'माहिंस्यात्सर्वाभूतानि' 'न मांस मश्नीयात्' 'नोच्छिष्टङ्कस्यचिद्द्यात्' इत्यादि शास्त्रेण निषिद्धत्वेऽपि प्रत्यक्ष लोकाचारविरुद्धत्वेऽपि 'अग्नीषोमीयं पशुमालभेत' 'सोमेन यजेत सोमे नोच्छिष्टं' इत्यादिविशेषशास्त्रविहितपशुहननमांसभक्षणसुरापानादेः प्राकृतकर्तव्यत्ववत् 'तत्राजन्मान्तदीक्षा' 'सर्वलिङ्गं स्थापयति' 'त्रिसन्ध्यं शिवमभ्यर्चयेत्'

नित्यं स्ववामहस्ताग्रे सावधानेन पूजयेत् ।

इत्यादिविधिना लिङ्गधारणलिङ्गपूजादेर्यावज्जीवकर्तव्यत्वविधाने,

लिङ्गार्चनरतायाश्च ऋतौ नार्या न सूतकम् ।

इत्यादिविशेषशास्त्रबलात् रजस्वलादीनां लिंगधारणलिंगपूजाद्यंशे परिशुद्धत्व-मिति वाच्यम्। अपगतमांसपिण्डस्योपगतमंत्रपिंडस्य निवृत्तजीवभावस्य वीरशैव-स्त्रीपुरुषादेः सूतकसद्भावस्य वक्तुमशक्यत्वात् । अत एव लिंगधारण चन्द्रिकाकारेण सूतकनिषेधबोधकवाक्यबाहुल्यबलात् सर्वदा सर्वत्र कार्ये सूतकाभावोऽभ्युपगतः ।

नन्वस्तु तुर्यपदप्रविष्टानां त्यक्तदारादीषणानां शरणस्थलोक्ताचरणशीलानां वीरशैवानां गुरुकृतसद्योनिर्वाणददीक्षासंपन्नानामिवालिंगिब्रह्मचारियतीनामिव च सूतकाभावः । शरणानां बाह्यसतीसंगराहित्येन स्वचिच्छक्तिसम्मेलनानन्दपूर्णत्वान्निवृत्तिमार्गेण भक्तिज्ञानवैराग्यसम्पन्नत्वात् ।

'प्रापञ्चिकसुखं नास्ति शरणस्थलमुत्तमम्'

इत्यत्र प्रापञ्चिकसुखं नास्तीत्यनेन शरणानां स्त्रीपरिग्रहाभावस्य सूचितत्त्वात्, ब्रह्मचारियतिसादृश्यस्य सत्त्वात्, सद्योनिर्वाणदीक्षाया अपि सन्यस्तस्वशरीराद्यभिमानानामत्यन्तविरक्तानां सञ्चितागामिप्रारब्धकर्मजालविलयार्थमाचार्येण क्रियमाणत्वात्, तैरपि साम्याच्च । किंतु चिरनिर्वाणदाया दीक्षायास्त्रीबालाविरक्तानामपि साधारण्यात् गुरुकृततादृशदीक्षासंपन्नानां संसारिणां साधकानां कथमशौचाभावः सर्वदा सर्वत्रेतिचेत् सत्यम् । इत्थं चेत् लिंगधारिणां सूतकात्यन्ताभावबोधकवाक्यानां शरणस्थलप्रविष्टविषयकत्वेन सामञ्जस्यं वक्तव्यं अन्यथा,

तथा सूतकिनः शैवाः पूजामात्रसुनिर्मलाः ।

इति पूर्वोक्तागमवाक्यविरोधः स्यादेव । तस्मान्मोक्षोपयुक्तसाङ्गशिवार्चनादिनित्यकर्मेतरान्यस्पर्शपाकादिकार्ये रजस्वलादीनां लिंगधारणदीक्षासंपन्नानामशौचमभ्युपगंतव्यम् ॥

न चाशौचस्वीकारे अशुचिशरीरसंबंधात् स्थावरलिंगस्यैव स्वेष्टलिंगस्यापि दीक्षासमये आचार्यकृतपूजनीयताप्रयोजकसंस्कारस्यापि नाशः स्यादिति वाच्यम् । इष्टलिंगस्थावरलिंगयोर्वैषम्यात् । स्थावरलिंगे पूजायां कर्तृनियमाभावात् । एकस्याशुचित्वे पुरुषान्तरेण तत्पूजाया निर्वाहात् । स्वेष्टलिंग पूजादेः स्वेनैव यावज्जीवकर्तव्यत्वनियमात् । स्वेष्टलिंगपूजादेर्यावज्जीव

कर्तव्यतावोधकशास्त्रबलेन दीक्षाकाले आचार्यकृतपुरुषैककर्तव्यताकपूजाप्रयोजक संस्कारस्य स्थायित्वमस्युपगम्यते । 'सर्वलिंगं स्थापयति पाणिमन्त्रं पवित्रं' इत्यत्र पवित्रशब्देन शुच्यशुचिकालेऽपि स्वेष्टलिंगस्य धारणीयत्वस्य सूचितत्वात्।

'अपगच्छतु सर्वस्वं शिरच्छेदनमस्तुवा ।
माहेश्वरो न मुंचेत लिङ्गपूजामहाव्रतम् ॥
शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत् ।
नित्यं स्ववामहस्ताग्रे सावधानेन पूजयेत् ॥

इति कदापि स्वेष्टलिंगपूजादेस्त्यागायोगात्। स्थावरलिंगे आचार्यकृतपूजनीयत्वप्रयोजकसंस्कारस्याशुचिशरीरस्पर्शेन नाशे कल्पितेऽपि स्वेष्टलिङ्गे तदभावात् । अन्यथा यागजन्यस्यापूर्वरूपसंस्कारस्य यजमानदम्पत्योरात्मगतस्य गङ्गास्नानदानादिजन्यतत्तत्संस्काराणां चान्तरालिकाशौचेन नाशे सकलकर्मणामानर्थक्येन तद्बोधकवेदशास्त्रादेरप्रामाण्यापत्त्या बौद्धमतप्रवेशापत्तेः । तस्मान्ना शौचस्य संस्कारनाशकत्वं वक्तव्यम् ।

ननु भोः! 'यथा गङ्गा शिवसङ्गात्' इत्यत्रैव गङ्गाजलदृष्टान्तस्योक्तत्वात गङ्गाजलस्य कदाप्यशौचङ्कल्पितुं न युक्तम् । तथैव रजस्वलादीनां शिवलिङ्गसङ्गस्य सर्वदा सद्भावात् कथमशौचं वक्तव्यमिति चेन्न ।

'दुष्टचण्डालभांडेषु यथा भागीरथीजलं'

इतिगौतमोक्तप्रकारेण दुष्टचंडालभांडानीतस्य तस्याप्यशौचस्य कल्पनीयत्वात् तद्भाण्डानीतं तज्जलं यत्काले तत्काले तस्याशुचिरिव रजस्वलादीनां नित्यशिवसंगेऽपि ऋतुकालेऽशौचं वक्तव्यमेव ।

3

न च षडध्वशोधनसंस्काराहार्णां सर्वेषामपि स्त्रीपुरुषाणां दीक्षासमय एव श्रीगुरुनिवर्तितमांसपिण्डत्वात्तत्कृतमन्त्रपिण्डत्वात् तत्कृतलिंगांगसामरस्येनैव जीवभावस्यापि निवृत्तत्त्वाच्च शरणस्येव तेषां दृढतरलिंगांगषट्स्थलसामरस्य-साक्षात्काराभावेऽपि न वक्तुं शक्यतेऽशौचमिति वाच्यम् । दीक्षासमये साधनावस्थासहितसामरस्यस्य गुरुणा कृतत्वात् साधनकाले साध्यमन्त्रतनुत्वात्मक-शिवत्वाभिव्यक्तेर्मुक्तेरसंभवात् । न हि दृश्यते बीजावापसमये क्षेत्रे तत्फलम् ।

यदि मांसपिण्डनिवृत्त्या मन्त्रपिण्डोत्पत्त्यनन्तरं जीवभावोऽप्यत्यन्तं निवर्तेत तदा दीक्षोत्तरं प्रत्यहं साधनानपेक्षणा स्यात् । शिवपूजाशिवध्यानशिव-मन्त्रजपशिवमन्त्रार्थजिज्ञासादीनां साधनानामनेकेषां वैयर्थ्यापत्तेस्तस्मान्मांस-पिण्डनिवृत्तिपूर्वकमन्त्रपिण्डोत्पत्तेर्भावनामात्रगम्यत्वात् । वस्तुतो निश्शेषं जीवभावानिवृत्तेः । तदुक्तं क्रियासारे--

प्रथमं साधनावस्थासहितं गुरुणा कृतम् ।
बीजावाप इव क्षेत्रे पालनात्तत्फलाय हि ॥

परिपालनतः कालात्प्रारब्धपरिपाकतः ।
फलरूपं सामरस्यं तदनावृत्तिलक्षणम् ॥

अत उद्भाविता दोषा विलीना बुद्बुदा इव ।
तस्मात्प्रातः शिवध्यानं कृत्वा संक्षेपतः स्वयम् ॥

शुद्धस्नातो भस्मना वा वारुणेनाथवा पुनः ।
धृतत्रिपुण्ड्रपूतात्मा शिवपूजां समारभेत् ॥

शिवस्य बाह्यपूजान्ते तदेकन्यस्तमानसः ।
वेदान्तार्थविचारोऽयं कार्यः पाशनिवृत्तये ॥

इति दीक्षोत्तरं शिवपूजावेदान्तार्थविचारादीनां साधनानां चोक्तत्वात् । अग्रे

वेदान्तार्थविचारोऽयं श्रुतिभिः श्रवणं भवेत् ।
श्रुतिः पञ्चाक्षरो मन्त्रो मन्त्रार्थस्यैव चिन्तनम् ॥

तिचोक्तत्वात् । लिंगधारणचन्द्रिकाकारेणापि "मांसपिंडनिवृत्तेर्मन्त्रपिंडो- त्पत्तेरिव भावनामात्रगम्यत्वात्' इत्युक्तम् । तस्माच्छिवपूजाद्यंशे सूतकिनां परि- शुद्धत्वं नान्यत्रेति सिद्धम् ।

नन्विदमशौचस्याव्याप्यवृत्तित्वपरं व्याख्यानं मूलविरुद्धमिति न भ्रमि- तव्यम् । 'न सूतकं नाप्यशुचित्वमेषा'मित्रत्यत्रेदंपदस्य सिद्धसाधकोभयसाधा- रण्यात् पड्लिंगेषु षडलिङ्गयोगस्य षट्स्थलज्ञानसिद्धानामेव सत्वात् पद्मपत्राम्भः। संबन्धवद्देहसंबन्धवतां जीवन्मुक्तानामेव न सूतकं नाप्यशुचित्वमिति तात्पर्यम् । साधकानां त्वशौचस्याव्याप्यवृत्तित्वमेव वक्तव्यमन्यथा सिद्धान्तागमविरोधः स्यादेव ।

एतेन—

'न तस्य सूतकं किंचित्प्राणलिंगांगसंगिनः'

ति श्रीरेणुकभगवत्पादोक्तेर्विरोधशंकापि परिहृतेति मंतव्यम् । अग्निमरजस्व- लादिविषयकोक्तेरपि न विरोधः । लिंगार्चनरतत्वविशेषणेन लिंगार्चनादि- नित्यकर्मकर्तव्यतायामेव रजस्वलादीनामशौचस्याभाव उक्त इति तत्तात्पर्यं वक्तुं शक्यत्वात्। शरणाभिधानस्य जीवन्मुक्तस्य लिंगांगसंगिनः सूतकसामान्याभावेन उक्तेः रजस्वलादीनामपि लिंगधारणदीक्षायुतानां सूतकमस्ति न वेति शङ्कावारणार्थं 'लिंगार्चनरतायाश्च' इत्यादिकमुक्तम् । तथाच यस्मिन्काले रजस्वला लिंगा- र्चनरता भवति तस्मिन्काले तत्पूजायां न सूतकं तस्या नान्यत्रेति भगवत्पादानां तात्पर्यम् ।

इत्थमेव प्रसूतिकाविषयेऽप्यवगन्तव्यम्। तस्या अपि तथेति लिङ्गार्चारतत्त्व विशेषणात् । अन्यथा तद्विशेषणमनर्थकं स्यात् स्याच्च पूर्वोक्तसिद्धान्तागम

विरोधोऽपि । मरितोंटदार्यस्य रजस्वलादिविषयेऽप्यशौचसङ्कोचे न तात्प
मिति यत्तन्मूलतात्पर्याज्ञानविलसितमिति सिद्धान्तागमानवलोकनविजृम्भि
मिति च ज्ञेयम् ।

लिंगधारणचंद्रिकाकारेण पूर्वोक्ताशौचसंकोचप्रतिपादकं केषाञ्चि
आहुरित्यनुक्त्वा प्राहुरित्युक्तस्त्वात् तत्रापि तस्य तात्पर्यमुन्नेयम् । तस्
विरोधस्तदुक्तेरपि ।

यद्वा कर्मान्तरेऽपि परिशुद्धिः स्यादिति तद्वाक्ये कर्मान्तरप
किमुच्यते? अन्यस्पर्शादिकमिति चेदत्र अन्यस्पर्शः कः? स्वभिन्नसर्वज
स्पर्शो वा स्वभिन्नानां केषाञ्चिज्जनानां स्पर्शो वा? आद्ये लोकविरोधः
द्वितीये त्विष्टापत्तिः । स्वशिशोरन्नप्राशनात्प्राक् तत्स्पर्शस्यावश्यकत्वात्
तस्मात् कर्मान्तरपदेन स्वशिशुस्पर्शे परिशुद्धिः न त्वन्यत्रेति वक्तव्यत्वाल्लिं
धारणचंद्रिकाकारस्याप्यशौचसङ्कोच एव तात्पर्यं वर्णनीयं भवति ।

क्रियासारकारस्यापि मदुक्तार्थ एव तात्पर्यं तदुक्तप्राकृतब्रह्मचारियतिदृष्टा
न्तेन सन्यस्तस्वशरीरपत्नीपुत्रादिमोहानां शरणानां सूतकत्यागनियमस्य अग्निहो
त्रानुष्ठानस्यार्द्रवस्त्रेण तात्कालिकशुद्धिवदिति द्वितीयोपमानेन रजस्वलादिस्त्री
नित्यसंकल्पितलिंगधारणलिंगार्चनमात्रे परिशुद्धेश्चावगमान्न तद्वाक्यविरोधः
लिंगधारणचंद्रिकाटीकाकारस्यापि मदुक्तार्थ एव तात्पर्यम् । परवैराग्यप्राप्त
सन्यस्तशरीराभिमानः प्राकृतसन्यासीव वीरशैवमते यःकश्चिच्छिवमयत्वप्राप्त
शरीरो भक्तादिशरणान्तस्थलारूढस्तस्यैवाशौचं नास्तीति वक्तुं शक्यत्वात्

यदि तस्यैतन्मतीयानां सर्वेषां चिरनिर्वाणददीक्षासंपन्नानां स्त्रीबालादी
नामपि मरणपर्यंतमशौचमेव नास्तीति तात्पर्यं तदा तदेतन्मतसिद्धान्ताज्ञान
विलसितमिति मन्तव्यम् ।

किञ्च क्रियादीक्षान्तर्गतस्वस्तिकारोहणदीक्षया श्रीगुरुणा जननीगर्भ-जातमांसपिण्डनिवृत्त्यर्थमापादमस्तकं संहारक्रमेण स्थानषट्के षडध्वन्यासः अनन्तरमुत्पत्तिक्रमेणामस्तकपादं मन्त्रपिंडोत्पत्त्यर्थं षडध्वन्यासः क्रियते तेषामपि मन्त्रपिंडस्य भावनामात्रगम्यत्वेन किं वक्तव्यमेतन्मतीयानां केषाञ्चिदध्वषट्क शुद्धिरूपसंस्कारानर्हाणां मन्त्रपिंडत्वप्रयुक्तशिवमयत्वप्राप्तशरीरत्वाभाव इति। उक्तञ्च क्रियासारे षोडशोपदेशे केषाञ्चित् षडध्वशुद्धयात्मकसंस्कारे नाधि-कार इति।

शूद्राणामन्यजातीनां पतितानां विशेषतः।
तथा सङ्करजातीनां नाध्वशुद्धिर्विधीयते॥

किमत्र बहुनोक्तेन योऽपि कोऽपि शिवाश्रितः।
संस्कार्यो गुर्वधीनश्चेत्संस्क्रिया तु प्रभिद्यते॥

इति। तस्माच्छरणातिरिक्तानां सर्वेषां वीरशैवमतीयानां वास्तविकशिव मयत्वप्राप्तशरीरत्वाभावादशौचसंकोचोऽभ्युपगन्तव्य इति सिद्धान्तः॥ १३॥

सदा शरीरे लिंगधारणविषये लिंगधारी वीरशैवः सदा शुचिरेव। अतो न कदापि लिङ्गं स्वशरीराद्वियोजनीयमित्यभिप्रायेणाह—

गच्छंस्तिष्ठन्निमिषन्नुन्मिषन्वा
स्वपन् जाग्रन् लिंगधारी शुचिः स्यात्॥ १४॥

गच्छन्निति। गच्छन्वा गमनक्रियावानपि तिष्ठन्वा गमनक्रियारहितोऽपि निमिषन्वा निमेषक्रियावानपि स्वपन्वा स्वापावस्थासंपन्नोऽपि जाग्रन्वा जागरण वानपि लिंगधारी लिंगधारणदीक्षासंपन्नः शुचिः परिशुद्धः शुच्यशुच्यादिसर्वा वस्थासु लिंगधारणलिंगपूजनादिनित्यकर्मानुष्ठानयोग्य एव स्यात् भवेत्। तदुक्तं वीरमाहेश्वराचारसंग्रहे—

गच्छंस्तिष्ठन् स्वपन्जाग्रन्नुन्मिषन्निमिषन्नपि ।
शुचिर्वाप्यशुचिर्वापि लिंगं सर्वत्र धारयेत् ॥ इति ॥ १४

हरगुरुचरशेषभोजने नोच्छिष्टं मूलाद्युत्सर्जनेऽपि नाशौचं लिङ्ग
णाशे इत्याह—

भुंजन्मूत्राद्युत्सृजन्वा कदाचित्
न तत्रोच्छिष्टं भजते शुद्धदेही ॥ १५ ॥

भुञ्जन्निति। शुद्धदेही शुद्धः षडध्वशुद्धिरूपसंस्कारेण सं
परिशुद्धः देहः मांसपिंडः सोऽस्यास्तीति शुद्धदेही मन्त्रपिंडवान्
धारीत्यर्थः। भुञ्जन् गुरुलिंगजङ्गमैरुपभुज्य विसृष्टं शेषमभ्यवहरन्
तच्छेषाभ्यवहारे उच्छिष्टं उच्छिष्टसूतकं कदाचिद्वा कदाचिद्पि न भजते
प्राप्नोति। कदाचिद्वा मूत्राद्युत्सृजन् मूत्रं आदिना मलस्यापि ग्रहणात् मल
विसृजन् लिंगधारी शुद्धदेही लिंगधारणविषये परिशुद्धस्तदापि लिंगं ध
दित्यर्थः। तदा लिङ्गधारिणो वीरशैवस्याशौचाभावे मलमूत्रादिविस
वतस्तस्य मृज्जलादिभिः शौचविधानस्य वैयर्थ्यापत्तेः। न वयं मन्त्र
स्तत्त्वदृशः विधिनिषेधवशवर्तिन इति चेत् यथेष्टाचरणं स्यात् स्याच्चाशुचि
णादिकमपि। तथासति शुनां तत्त्वदृशां च साम्यप्रसङ्गः स्या
पञ्चदश्याम्—

'शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे'। इति ॥

किञ्च षडङ्गयोगिनां वीरशैवानां मृज्जलादिभिः शौचक्रियाया आव
कत्वात् तस्या भक्ताङ्गांतर्गतत्वात् भक्तादिषडङ्गयोगे पातञ्जलोक्ताष्टांगयोग
न्तर्गतत्वात् नियमस्याष्टाङ्गान्तःपातित्वात् शौचक्रियाया नियमान्तर्भूत

लिंगधारणदीक्षासंपन्नस्य यदि शौचविधिर्न स्यात्तर्हि तस्य षडङ्गयोगोऽपि न संभवेत्तथासति मोक्षाधिकारोऽप्युत्पतेत् ।

पद्मपुराणे मोक्षाधिकारिणं ब्रूहीति रामप्रश्ने अन्यचित्तव्यावृत्त्या शिवार्चनैकन्यस्तचित्तस्य मोक्षाधिकारमुक्त्वा,

जडोंऽधो वधिरो मूको निःशौचः कर्मवर्जितः ।
अज्ञापहासोऽभक्तश्च भूतिरुद्राक्षधारिणः ॥

लिंगिनो यश्च वा द्वेष्टि ते नैवात्राधिकारिणः ।

इति मोक्षानधिकारिनिरूपणे शिवेन निश्शौचस्य पुरुषस्यानधिकारिवर्गपरिगणितत्वान्न वाच्यं न वयं विधिनिषेधवशवर्तिन इति । किंतु अत्याश्रम शब्दितचतुर्विधशिवाश्रमोक्ततत्तत्कर्मानुष्ठानं तत्तदाश्रमिणा वीरशैवेन कर्तव्यमेव । अत एवोक्तं श्रीलिंगपुराणे उत्तरभागे एकविंशतितमाध्याये—

यजुरप्याह सर्वं वै लिंगं स्थापयतीति च ।
तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रतः ॥

पाणौ लिंगं विनिक्षिप्य दीक्षाकाले गुरुः शिवम् ।
येन स्मरति तन्मन्त्रं पाणिमन्त्रं वदन्ति हि ॥

पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात् ।
पवित्रीकरणात्पुंसां पवित्रमिति कथ्यते ॥

अतः सर्वेषु कालेषु धारयेल्लिंगमुत्तमम् ।
गच्छंस्तिष्ठन्स्वपन् जाग्रन्नुन्मिषन्निमिषन्नपि ॥

शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत् ।
लिंगधारी सदा शुद्धो निजलिङ्गं मनोहरम् ।

अर्चयन् गन्धपुष्पाद्यैः करपीठे समाहितः ॥

नित्यानि कर्मवृन्दानि तथा नैमित्तिकानि च ।
शिवार्पणधिया कुर्यात्सम्यग्ज्ञानाभिवृद्धये ॥

अकृत्वाऽविहितं कर्म निषिद्धं परिवर्जयेत् ।
निषिद्धपरिहारेण विहिते लभते मतिम् ॥

तस्मात्सर्वप्रयत्नेन शिवाराधनतत्परः ।
नित्यं नैमित्तिकं कृत्वा काम्यङ्कर्म सदा त्यजेत् ॥ इति ॥

देहे कुत्र लिंगं धार्यमित्यत्राह—

शीर्षे कण्ठे वक्षसि कक्षदेशे
नाभौ हस्ते सर्वदा प्राणलिङ्गं धार्यम् ।
यथासंप्रदायं पुरस्तात्
गुरोर्विदित्वा हृदयं मुख्यमुक्तम् ॥ १६ ॥

शीर्ष इति । अत्रेष्टलिंगस्यैव प्राणलिंगत्वेन व्यपदेशः कृतः तस्य प्राण-वद्धारणीयत्वात् शिष्यप्राणकलाया लिंगे निवेशितत्वात् । यथा संप्रदायं संप्रदायमनतिक्रम्य दत्तमिति शेषः प्राणलिंगमिष्टलिंगं विदित्वा गुरुमुखात् कुत्र धार्यमिति ज्ञात्वा तदुक्ते शीर्षे, कण्ठे, वक्षसि, कक्षदेशे, नाभौ, हस्ते च सर्वदा सर्वस्मिन् कालेऽपि यावज्जीवं शुच्यशुचिकालेऽपीत्यर्थः । गुरोः पुरस्तात् स्वगुरोरग्रे तत्सन्निधावित्यर्थः धार्यं धर्तव्यं शिष्येण । हृदयं वक्षसः स्थानं मुख्यं प्रधानमुक्तं तद्धारणाय पूर्वगुरुभिरिति योजना ।

यथासंप्रदायमित्यत्र संप्रदायो नामात्र तत्तद्वंशपरंपरागतशास्त्रसिद्धसंस्कार-पद्धतिस्तामनतिक्रम्य च शिष्यं लिंगं संस्कृत्य गुरुणा प्राणलिंगं दातव्यमिति

गुरोरप्ययं नियमः प्रत्यक्षश्रुत्यैवोक्ततथैव 'चतुर्वर्णानांधा रणंकुर्यात्' 'श्रौता-नामुपनयनकाले धारणं' 'श्रौताश्रौतेषु धारणं'

वेदोक्तविधिना श्रौतं तद्रहितमश्रौतम् ।

इति लिङ्गोपनिषद्वाक्यैरपि चतुर्वर्णानां लिङ्गधारणविधिस्तत्रेऽपि गर्भाष्टमे वर्षे श्रौतसंस्कारः श्रौतानां कालान्तरे अश्रौतसंस्कारोऽश्रौतान मित्युक्त एव संप्रदायः । प्रदर्शितानि लिंगधारणस्थानानि वीरमाहेश्वराचार्यग्रंहेऽपि—

तल्लिंगं दापयेच्छिष्य प्राणलिंगमिदन्तव ।
एवमुक्तस्तदा लिंगं न कदाचिद्वियोजयेत् ॥

उत्तमाङ्गे गले वापि कक्षे वक्षस्थलेऽपि वा ।
तथा हस्ततले वापि प्राणलिंगं धरेत्सुधीः ॥

नाभौ च हृदये मूर्ध्नि सर्वावस्थासु सर्वदा ।
श्रीलिंगधारणं कुर्याद्देवि नित्यं मम प्रियः ॥ इति ॥ १६ ॥

इतः परं लिंगधारणमहाव्रताङ्गं भस्मधारणमाह —

स्नानं कृत्वा शिवतीर्थेऽथ देहं
सर्वं भस्मोद्धूलनात्पावयित्वा त्रिपुण्ड्रं धार्यम् ॥ १७ ॥

स्नानमिति। शिवतीर्थे पवित्रजले स्नानं कृत्वा अथ अनन्तरं सर्वं समग्र देहं शरीरं भस्मोद्धूलनात् भस्मना सर्वाङ्गेषु लेपनात् पावयित्वा पावनं कृत्वा, उक्तञ्चोद्धूलनम् ।

अग्निरित्याधिभिर्मन्त्रैः सद्योजातादिमन्त्रतः ।
सर्वांगोद्धूलनं कुर्यादापादतलमस्तकम् ॥

ति। अथर्वशिरस्यप्युक्त—

'अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्' इति ॥

नन्वथर्वशिरसि पाशुपतव्रताङ्गत्वेन समन्त्रकभस्मधारणविधानात् भस्मधारणस्य सार्वत्रिकत्वाभावान्न श्रौतपरिग्राह्यत्वमिति चेदाह—त्रिपुण्ड्रं धार्यमिति। त्रिपुण्ड्रं भस्मना तिर्यक् त्रिपुण्ड्रं वक्ष्यमाणस्थानेषु धार्यं धारणीयं सर्वश्रौतैरित्यर्थः। ऋग्वेदेऽपि जमदग्निकश्यपदेवानामपि त्रिपुण्ड्रधारणं श्रूयते 'त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषं यद्देवानां त्रियायुषं तन्मे अस्तु त्रियायुषं' इति जाबालोपनिषदि 'स एष भस्मज्योतिः'।

त्रिपुण्ड्रं येऽभिनिन्दन्ति निन्दन्ति शिवमेव ते।
धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते॥

इति ग्रन्थान्तरेऽपि—

ऊर्ध्वपुण्ड्रं भवेत्साम मध्यपुण्ड्रं यजूंषि च।
अधःपुण्ड्रं ऋचः साक्षात्स्यात्पुण्ड्रं त्रियायुषम्॥

यजुर्वेदे—'भूत्यै न प्रमदितव्यं' इति।

नन्वत्र भूतिशब्दस्यैश्वर्यपरत्वान्न भस्मपरत्वमिति चेन्न। 'धनमाहृत्य' इत्यादिना पूर्वमेव तस्य गतार्थत्वात्। भस्मधारणं श्रौतपरिग्राह्यमेव। भस्मधारणविहीनस्य प्रत्यवायोऽपि श्रूयते। वृद्धशातातपे—

'विभूतिर्यस्य नो फाले कण्ठे रुद्राक्षमालिका।
मुखे पञ्चाक्षरो मन्त्रस्तन्त्यजेदन्त्यजं यथा॥' इति।

ननु कालाग्निरुद्रोपनिषदि भस्मधारणविधिं बहुधा प्रतिपाद्य तदुपसंहारे त्रिपुण्ड्रं भस्मना करोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा समस्तपात

कोपपातकेभ्यः पूतो भवति स सर्वान्देवान् ध्यातो भवति स सर्वेषु तीर्थेषु स्नातो भवति' इत्यादिना भस्मधारणफलस्य व्यपदेशात् तदकरणे प्रत्यवायाभावात् न नित्यविधिरिति चेन्न 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ नित्याग्निहोत्रज्योतिष्टोमादीनामपि फलव्यपदेशात् तेषामपि नित्यविधित्वं न स्यात् । तदकरणे प्रत्यवायः श्रूयते इति चेत् भस्मधारण-स्याप्यकरणे प्रत्यवायः श्रूयत एव । जाबालोपनिषदि—

येषां न जायते श्रद्धा श्रौते भस्मनि सर्वदा ।
गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः ॥

इति । तस्माद्भस्मधारणस्य बहुश्रुतिसिद्धत्वात् अत्रापि त्रिपुण्ड्रं धार्यमिति विधीयते ॥ १७ ॥

भस्मनो हि सद्योजातादि पञ्चमुखोत्पन्ननन्दादिपञ्चगवां गोमयजन्यत्वात् भूतिशिवतत्त्वज्ञानपापभर्त्सनविपत्क्षरणभूतरक्षणात्मकपञ्चकार्यजनकत्वाच्च विभूति भसितभस्मक्षाररक्षेति पञ्चनामानि सिद्धान्तशास्त्रे प्रसिद्धानि वर्तन्ते । जाबा-लोपनिषदादिष्वपि 'सद्योजातात् पृथिवी' इत्यादिना पञ्चनामान्युक्तान्येव तथाप्यत्रात्यन्ताभ्यर्हितत्वात्सकलपापौघगिरिकुलिशायुधरूपत्वात्पापनाशं विना चित्तशुद्धेरभावात् तदभावे ज्ञानानुदयात् तदभावे शिवत्वप्राप्तेरभावाद्भवल भस्मैकनामनिर्देशः क्रियते—

भर्त्सनात्पातकौघगिरेर्भस्मेत्याहुः सत्यमेतत् ॥ १८ ॥

भर्त्सनादिति । पातकौघगिरेः पातकानां महापातकोपपातकानामोघः-समूहः स एव गिरिः पर्वतस्तस्य भर्त्सनात् भयोत्पादनात् भस्मेत्याहुः शिवा-चार्या इत्यर्थः । तदुक्तं सिद्धान्तशिखामणौ—

विभूतिर्भूतिहेतुत्वाद्भसितन्तत्त्वभासनात् ।
पापानां भर्त्सनाद्भस्म क्षरणात् क्षारमापदाम् ॥

रक्षणात्सर्वभूतेभ्यो रक्षेति परिगीयते ।
इति । एतत्कथनं सत्यं यथार्थमेव ॥ १८ ॥

कुत्र तद्धार्यमित्यत्राह—

**स्थानं त्रिपुण्ड्रस्य शिरोललाटवक्षः स्कन्धमणिबन्धेषु कूर्परे नाभिप्रदेशे पार्श्वयोर्गण्डप्रदेशे ऊरुप्रदेशे गुल्फयोश्च क्रमात्स्यात् ॥**

स्थानमिति । त्रिपुण्ड्रधारणस्थानानां संख्यानियमाभावात् शास्त्रोक्तेषु द्वात्रिंशत्स्थानेषु षोडशस्थानेषु अष्टस्थानेषु पञ्चस्थानेषु एकादशस्थानेषु पञ्चदश स्थानेषु वा त्रिपुण्ड्रं धार्यमित्यर्थः । तदुक्तं वीरशैवाचारप्रदीपिकायां—

द्वात्रिंशत्स्थानके वापि षोडशस्थानके तथा ।
अष्टस्थानेऽपि वा कुर्यात्पञ्चस्थानेऽथवा स्मृतम् ।

एकादश त्रिपुण्ड्रस्य स्थानान्याहुर्मनीषिणः ।
स्थानपञ्चदशे चैव धारयेच्च त्रिपुण्ड्रकम् ॥

इति । उक्तञ्च सिद्धान्तशिखामणौ—

त्रिपुण्ड्रं धारयेन्नित्यं भस्मना सलिलेन च ।
स्थानेषु पञ्चदशसु शरीरे साधकोत्तमः ॥

उत्तमाङ्गे ललाटे च श्रवणद्वितये तथा ।
गले भुजद्वये चैव हृदि नाभौ च पृष्ठके ।
बाहुयुग्मे ककुद्देशे मणिबन्धद्वये तथा ॥ इति ॥ १९ ॥

इतः परं भस्मत्रिपुण्ड्रस्य फलमाह—

वह्नित्रयश्च जगत्त्रयं यद्गुणत्रयं तच्छक्तित्रयं स्यात्।
धृतत्रिपुण्ड्रं यदि कोऽपि दैवात्तं दृष्ट्वा अन्यः पातकौ
घाद्विमुक्तः ॥ २० ॥

वह्नित्रयमिति। अत्र यत्पदं पूर्वोक्ततिर्यक्त्रिपुण्ड्रपरं यद्भस्मत्रिपुण्ड्रं वर्तते तदेव वह्नित्रयं तदेव च जगत्त्रयं तदेव गुणत्रयं तदेव शक्तित्रयं स्याद्भवेदित्यन्वयः। तथा च भ्रूनिकटवर्तिप्रथमरेखातदूर्ध्वद्वितीयरेखातदूर्ध्वतृतीय-रेखाणां त्रयं यद्वर्तते तदेव हि त्रयं वह्नीनामाहवनीयगार्हपत्यदक्षिणाग्नीनां त्रयमित्यर्थः। यत् त्रिपुण्ड्रं उक्तरीत्या भस्मरेखात्रयं पुण्ड्रपदस्य रेखापरत्वात् तदेव जगत्रयं जगतां भूलोकान्तरिक्षलोकद्युलोकानां त्रयं स्याद्यद्भस्मरेखात्रयं तदेव गुणत्रयं गुणानां रजःसत्त्वतमोरूपाणां त्रयं स्याद्यद्भस्म त्रिपुण्ड्रं वर्तते तदेव च शक्तित्रयं शक्तीनामिच्छाज्ञानक्रियाशक्तीनां त्रयं स्यात्।

उक्तञ्च कालाग्निरुद्रोपनिषदीत्थमेव 'किं द्रव्यं कियत्स्थानं किं प्रमाणं कति रेखाः किं दैवतं का शक्तिः किं फलं' इति कुमारस्य प्रश्ने शिव उवाच द्रव्यन्तदाग्नेयं भस्म सद्यादिपञ्चब्रह्ममन्त्रैः परिगृह्य मानस्तोकेति समुद्धृत्य त्रियायुपञ्चमदग्नेरिति शिरोललाटस्कन्धेषु त्रियायुषत्र्यंबकैस्तिर्यक्तिस्रो रेखाः प्रकुर्वीत व्रतमेतच्छांभवं सर्ववेदेषु वेदवादिभिरुक्तं 'तत्समाचरेन्मुमुक्षुरपुनर्भवाय' इत्यादिना।

धृतत्रिपुण्ड्रं धृतास्त्रिपुण्डाः त्रिरेखा येन सः धृतत्रिपुण्ड्रः भस्मत्रिपुण्ड्रधारिणं कोऽप्यनिर्दिष्टः अन्यः धृतत्रिपुण्ड्रादन्यः पुरुषः दैवात्स्वभाग्यान् दृष्ट्वा पातकौघात् पातकानां समूहात् विमुक्तः स्यात् सन्त्यक्तो भवेद्यदि किं वक्तव्यं धृतत्रिपुण्ड्रः पातकौघविमुक्तो भवतीत्युपरिष्टादाशयः। इत्थमेवोक्तं वीरशैवाचारप्रदीपिकायां—

ये भस्मधारिणं दृष्ट्वा परितुष्टा भवन्ति ते।
देवासुरमुनीन्द्रैश्च पूज्या नित्यं न संशयः॥ इति ॥ २० ॥

इतः परं रुद्राक्षोत्पत्तिं तद्धारणं तत्फलं चाह—

उन्मीलिताक्षस्य पुरत्रयाणि दग्धुं शम्भोर्नयनेभ्योऽथ
पेतुर्जाता रुद्राक्षा जलबिन्दवोऽस्य ॥ २१ ॥

उन्मीलितेति। पुरत्रयाणि तारकाक्षादिनिर्मापितसुवर्णरजतलोहमयनगराणां त्रयाणि। कल्पभेदेन पुरत्रयस्य अनेकत्वाद्बहुवचनं संगच्छते। दग्धुं उन्मीलिताक्षस्य उन्मीलितं आविष्कृतं अक्षि अग्निनेत्रं यस्य तस्यास्य शम्भोः नयनेभ्यः पुरत्रयदहनानन्तरं नेत्रमुकुलनसमये सोमसूर्यवह्निनेत्रेभ्यः जलबिन्दवः अश्रुबिन्दवः पेतुः भूमौ निपतिता बभूवुः। अथ अनन्तरं त एव जलबिन्दवः रुद्राक्षाः रुद्राक्षनामका जाताः। उक्तं च कात्यायनशाखीयबृहज्जाबालोपनिषदि। कुमारं प्रति श्रीशम्भुना 'पुरा त्रिपुरवधाय उन्मीलिताक्षोऽहं तेभ्यो जलबिन्दवो भूमावपतन् त एव रुद्राक्षा जाताः सर्वानुग्रहाय' इति ॥ उक्तं च स्कान्दे—

बभूवुस्ते तु रुद्राक्षा ह्यष्टत्रिंशत्प्रभेदतः।
सूर्यनेत्रसमुत्पन्नाः कपिला द्वादश स्मृताः ॥

सोमनेत्रसमुत्पन्नाः श्वेतास्ते षोडश क्रमात्।
वह्निनेत्रोत्थिताः कृष्णा दश भेदाः प्रकीर्तिताः ॥ इति ॥ २१ ॥

सद्योजातादीनि पञ्चवक्त्राणि विन्द्यात् द्वात्रिंशद्रुद्राक्षाः कण्ठमालाप्रयुक्ताः शिखायामेको द्विचत्वारिंशदुक्ताः शिरोधार्याः कर्णयोर्द्वादशाथ शतत्रयं तूपवीतं च बाह्वोः द्वात्रिंशदुक्ताः मणिबन्धयोश्चतुर्विंशतिश्च शतमष्ट जपार्थम् ॥ २२ ॥

सद्योजातेति। सद्योजातादीनि सद्योजातं आदिर्येषां तानि। पञ्चवक्त्राणि सद्योजातवामदेवाघोरतत्पुरुषेशाननामकानि पञ्चमुखानि विन्द्यात्

पञ्चमुखरुद्राक्षस्यावगच्छेदित्यर्थः । कण्ठमालाप्रयुक्ताः कण्ठमालायै विहिता द्वात्रिंशद्रुद्राक्षा भवन्ति शिखायां विधिविहितमस्तकाग्रस्थितकेशसमूहे ।

'शिखा चूडा केशपाशो व्रतिनस्तु सटा जटा ।'

इत्यमरोक्तेः । अनेन केषाञ्चिन्मन्दानां शिखाशब्दस्य न वाच्यार्थता किं तु लक्ष्यार्थतैव युक्ता । वीरशैवानां शिखानर्हत्वादिति वादो निरस्तः प्रसिद्धशक्यार्थपरित्यागे बीजाभावात् । गङ्गायां घोष इत्यादौ गङ्गापदस्येव अन्वयाद्यनुपपत्यभावात् शक्यार्थतैवात्र शिखापदस्य युज्यते ।

किञ्च कथं वा शिखाशून्यमस्तके रुद्राक्षो धार्यः ? शिखासंबन्धिमस्तकभिन्नपदार्थे धारणयोग्यत्वे किन्न स्याद्धट इत्युक्ते पटस्य बोधः । पटेऽपि घटपदशक्तितत्संबन्धयोरभावात्तस्मात्कोशप्रसिद्धशिखायामेव रुद्राक्षः धार्यः । शतत्रयं तूपवीतं च । शतत्रयरुद्राक्षैर्मालां कृत्वा यज्ञोपवीतरूपेण धरेदित्यर्थः । शतमष्ट जपार्थम् । अष्टोत्तरशतरुद्राक्षैः कृता माला जपार्था । जपकर्मणि विनियुक्ता इत्यर्थः । शिष्टं स्पष्टम् ॥

इतः परं पञ्चाक्षरमहामन्त्रे परिदृश्यमानं समस्तं सूक्ष्मरूपेण सृष्टेः पूर्वमासीदित्युक्त्वा तं पञ्चाक्षरमन्त्रं शिवात् परगुरोश्चतुर्मुखो लब्धवानित्याह—

पुरा लीनाः सृष्टिकालाच्छिवस्य
पञ्चाक्षरे मन्त्रवर्ये समस्ताः ।
भूतानि पञ्च वेदा आगमाश्च
शिवाल्लब्धोऽभून्मन्त्रवर्यो विधात्रा ॥ २३ ॥

पुरेति । सृष्टिकालात्पुरा सृष्टेः पूर्वमित्यर्थः । लीनाः अव्याकृताः वटबीजे वटवृक्ष इव सूक्ष्मरूपेण विद्यमाना इत्यर्थः । 'सदेव सौम्येदमग्र आसीत्' इति श्रुतेः ।

'नासतो विद्यते भावो नाभावो विद्यते सतः ।'

इति स्मृतेश्च । असदुत्पत्तेरसंभवान्न मिथ्यावादिनामिव त्रैकालि निषेधप्रतियोगित्वं जगतः सिध्यति । किन्तु त्रैकालिकसत्यत्वमेवेति स्फुटी कृतं पुरा लीना इत्यनेन । कुत्र के इत्यत्राह — शिवस्येत्यादिना शिवस्य पञ्चाक्षरे सूक्ष्मस्थूलात्मके प्रणवसहितपञ्चाक्षरे मन्त्रवर्ये मन्त्राण सप्तकोटिसंख्याकाना वर्ये वरिष्ठे श्रीरुद्रोपनिषदादिप्रतिपाद्ये तत्वमस्यादिमहा- वाक्यार्थलिङ्गाङ्गसामरस्यबोधके समस्ताः सकलाः वेदाः षडंगसहिता ऋगादय आगमाः पादचतुष्टयसहिताः शिवागमाः पञ्च पञ्चसंख्यानि भूतानि सूक्ष्म- स्थूलानि गन्धादिविशेषाणि पृथिव्यादीनि च अत्र चकारोऽनुक्तसमुच्चयार्थकः तेन बहिरन्तःकरणादिसर्वमपि व्यक्तं नामरूपात्मकं जगत् पूर्वं पञ्चाक्षरमहा- मन्त्रे विलीनमासीदित्यर्थः ।

'पञ्चाक्षरमयं शम्भुं परब्रह्मस्वरूपिणम् ।
नकारादियकारान्तं ज्ञात्वा पञ्चाक्षरं जपेत् ॥
सर्वं पञ्चात्मकं विद्यात्पञ्चब्रह्मात्मकत्वतः ।'

इति पञ्चब्रह्मोपनिषद्यप्युक्तं । यत्रेदं विलीनमासीत्स मन्त्रवर्यः उप- देशार्हः पञ्चाक्षरमहामन्त्रः विधात्रा चतुर्मुखेन शिवात्पूर्वगुरोरीश्वराल्लब्ध प्राप्तः । 'स एषः पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति योगसूत्रात् चतुर्मुखः परगुरुशिवोपदिष्टनिर्गुणसगुणबोधकप्रणवसहितपञ्चाक्षरमहामन्त्रोऽ भूदित्यर्थः । उक्तं च वायवीयसंहितायाम्—

'सिसृक्षमाणो लोकांश्च त्रीनशक्तो ह्यसहायवान् ।
मुनिर्दश ससर्जादौ मानसानमितौजसः ॥
तेषां सृष्टिविवृद्ध्यर्थं मां प्रोवाच पितामहः ।
मत्पुत्राणां महादेव शक्तिं देहि महाद्विज ॥

इत्येवं प्रार्थितस्तेन पञ्चवक्त्रोऽब्रवीदिदम् ।
पञ्चाक्षराणि क्रमशः प्रोक्तवान् पञ्चभिर्मुखैः ॥
स पञ्चवदनैस्तानि गृह्णन् लोकपितामहः ।
वाच्यवाचकभावेन ज्ञातवान्मां महेश्वरम् ॥ इति ॥ २३ ॥

इतः परं पञ्चाक्षरमहामन्त्रस्य पापनाशकतामाह—

देहिनो देहमायाति न यावन्मन्त्रनायकः ।
तावत्पापानि गर्जन्ति सत्यं सत्यं पुनः पुनः ॥ २४ ॥

देहिन इति । मन्त्रनायकः मन्त्राणां सप्तकोटिसंख्याकानां नायकः जनकत्वेनोत्कृष्टः पञ्चाक्षरमन्त्रः देहिनः देहधारिणो जनस्य देहं यावन्न आयाति न प्राप्नोति पञ्चवक्त्रादिना दीक्षागुरोर्मुखात् । तावत् तावदेव पापानि पापतज्जनककार्मिकादीनि मलानि गर्जन्ति गर्जितं कुर्वन्ति । यस्य शिवदीक्षापूर्वकम् पञ्चाक्षरमहामन्त्रोपदेशो नास्ति । तस्य मलकार्याणि पापादीनि संभवन्त्येवेति भावः । सत्यमेतत् पुनःपुनरपि सत्यमेव । सानन्दोक्तिः पञ्चाक्षरमहामन्त्रश्रवणमात्रविध्वस्तपापत्वे ॥ सानन्दचरितोक्ते किं वक्तव्यं दीक्षाकाले गुरूपदिष्टपञ्चाक्षरमन्त्रस्य शिष्यस्य अप्राकृतमन्त्रपिण्डार्थं दीक्षागुरुन्यस्तमन्त्रवर्णदेहस्य गुर्वाज्ञापालनसञ्जनितकलात्मकशक्तिविशिष्टाद्वैतरूपमन्त्रानुसन्धानाविर्भूतलिङ्गाङ्गसामरस्यापरोक्षस्य नष्टपापत्वमिति ॥ २४ ॥

मूलप्रणवसहितपञ्चाक्षरमहामन्त्रस्य षडक्षरात्मकत्वात् कथं तस्य पञ्चाक्षरात्मकत्वं । कथं वा पञ्चाक्षरे भूतपञ्चकस्य वेदचतुष्टयस्य आगमानां च विलीनत्वमिति शिष्यस्याशङ्कां वारयति गुरुरूपेण भगवती श्रुतिः—

योऽयं नकारः सोऽयमकारः स सद्योजातो ऋग्वेदः स संपुट उच्यते । योऽयं मकारः सोऽयमुकारः स

वामदेव आपो यजुर्वेदो वस्त्रमुच्यते । योऽयं शिकारः सोऽयं मकारः सोऽघोरस्तेजः सामवेदो गुण उच्यते । योऽयं वाकारः सोऽयं नादः स तत्पुरुषः स वायुरथर्वण वेदो द्वारमुच्यते । योऽयं यकारस्तदिदं समस्तमोमिति निर्विशेषः प्रणवः सर्वोत्तर ईशान आकाश आगमो लिंगमुच्यते ॥ २५ ॥

य इति । हे सौम्य शिष्य योऽयं मदुपदिष्टप्रणवसहितपंचाक्षरमन्त्र घटको नकारो वर्तते सोयं नकारः एव अकारः मूलप्रणवप्रथमांशरूप अकारो भवति । अकारकार्यत्वान्नकारस्य । कार्यकारणयोरभेदात् । कारणे कार्य लयस्य कारणरूपेण स्थितेरभ्युपगमात् । स सद्योजातः सद्योजातनामकं ब्रह्म वाच्यवाचकयोरभेदात् । स्थूलपंचाक्षरघटकनकारवाच्यस्थूलसद्योजातात्म-काचारलिंगस्य नकारात्मकत्वात् ।

किंच स नकार एव भूः पृथिवी नकारवाच्यसद्योजातजन्यत्वा-द्भुवः । सद्योजातापरपर्यायाचारलिंगस्य क्रियाशक्तियुक्तत्वात् । अथ च स नकार एव ऋग्वेदः नकराभिन्नसद्योजातजन्यत्वादृग्वेदस्य । स ऋग्वेदः संपुटः समुद्गकः अमूल्यरत्नादिरक्षकरजतादिनिर्मितपात्रसदृशपात्रविशेषरूपः अग्रे शैवागमस्य लिंगत्वेन रूपकस्य वक्ष्यमाणत्वादत्र ऋग्वेदस्य संपुटत्वेन रूपकं कृतं "समुद्गकः संपुटो ज्ञेय' इति हारावलिः । 'समुद्गकः संपुटकः' इत्यमरः । उच्यते पूर्वगुरुभिरित्यर्थः । योऽयं मकारः पंचाक्षरमन्त्रघटकः सोऽयमुकारः सूक्ष्मपञ्चाक्षरसंज्ञितमूलप्रणवस्य द्वितीयोंऽशः मकारस्य प्रणवां-शोकारजन्यत्वात् । स मकार एव वामदेवः वामदेवाख्यं ब्रह्म वाच्य-वाचकयोरभेदात् । मूलप्रणवांशोकारजन्यमकारवाच्यगुरुलिंगपरापर्यायवाम-

देवस्य मकारात्मकत्वत्त् । मकारस्य तद्वाचकत्वात् । किं च स मकार एव आपः जलं जलस्य मकारवाच्यवामदेवोद्भूतत्वात् ।

अथ च स एव मकारः यजुर्वेदः यजुर्वेदस्य मकारवाच्यवामदेवमुखोत्पन्नत्वात् जलयजुर्वेदयोः सृष्टेः पूर्वं मकारे सूक्ष्मरूपेणावस्थितिः सृष्टिदशायां मकारादाविर्भाव इति बोध्यम् । स यजुर्वेदः वस्त्रं संपुटान्तरे वर्तमानः आगमरूपलिङ्गाच्छादकं वसनमुच्यते । योयं शिकारः पञ्चाक्षरमन्त्रस्थितः सोऽयं मकारः प्रणवस्य तृतीयोंऽशः । शिकारस्य तत्तृतीयांशमकारजन्यत्वात् । जन्यजनकयोरभेदात् । लयावस्थायामभेदस्य सृष्टिदशायांभेदस्य चांगीकारात । स शिकारः अघोरः अघोराभिधानं ब्रह्म वाच्यवाचकत् योरभेदात् । शिकारवाच्यशिवलिङ्गापरपर्यायाघोरब्रह्मणः शिकारात्मकत्वा शिकारस्य तद्वाचकत्वात ।

किञ्च स शिकार एव तेजः तेजस्तत्वं स सामवेदः तेजःसामवेदयो शिकारवाच्याघोरजन्यत्वात । स सामवेदः गुणः वस्त्रावयवसूत्रमुच्यते । योऽयं वाकारः पञ्चाक्षरमन्त्रस्थितः सोऽयं वाकार एव नादः प्रणवस्य चतुर्थांशः स वाकार एव तत्पुरुषः तत्पुरुषनामधेयं ब्रह्म । वाकारस्य तत्पुरुषापरपर्यायचरलिङ्गवाचकत्वात । वाच्यवाचकयोरभेदात् । स वाकार एवं वायुः अथर्वणवेदश्च भवति । वाय्वथर्वणवेदयोर्वाकारवाच्यतत्पुरुषजन्यत्वात् । तयोस्तदात्मकत्वमिति भावः । स अथर्वणवेदः द्वारं आगम लिङ्गस्य प्रवेशद्वारमित्युच्यते । योऽयं स्थूलपञ्चाक्षरान्त्यः यकारः तदिदं समस्तं पूर्वोक्तव्यस्तैरकारादिभिः संयुक्तं ओमिंति निर्विशेषः प्रणवः प्राकृत-विशेषरहितः ,मूलप्रणवः यकारस्य मूलप्रणवजन्यत्वात् । कार्यस्य कारणरूपेण स्थितेः । स यकारः सर्वोत्तरः सर्वोत्तमः प्रणवाभिन्नत्वात् । सर्वोत्तमप्रणववाच्यमहालिङ्गाभिन्नईशानब्रह्मप्रतिपादकत्वात । उक्तं च ब्रह्मोपनिषदि—

'तत्वमसि' इति महावाक्यार्थं लिंगांगसामरस्यात्मकषट्स्थलब्रह्मोपदेशं पुनः दीक्षागुरुरेव पंचाक्षरार्थत एव कुर्यान्न त्वन्येनेति सूचितं .योऽयं न इत्यादिना ।

पंचाक्षरार्थतश्चेममर्थं शिष्यस्य बोधयेत् ।

इति श्रीनीलकण्ठशिवाचार्येण तथैवोक्तत्वात् । शिवदीक्षाकाले तत्त्वम लिंगांगसामरस्यं साकल्येन पंचाक्षरार्थत उपदेष्टुमशक्यत्वात् ॥

इत्येतत्तत्वं यो विजानाति स नित्यशुद्ध-
बुद्धपरमानन्दपरमशिवस्वरूपः ॥ २६ ॥

इत्येतदिति । इत्येतत् पूर्वोक्तं नकारारादिवाच्यषड्विधलिं भक्ताद्यङ्गानां सामरस्यात्मकं शक्तिविशिष्टाद्वैतं षट्स्थलब्रह्म 'तत्त्वं ब्रह्म याथार्थ्ये' इत्युक्तत्वात् यःकश्चिद्वीरशैवो मुमुक्षुर्विजानाति विशेषेण श्रवणादि संशयादिराहित्येनापरोक्षीकरोति नित्यशुद्धबुद्धपरमानंदपरमशिवस्वरूपोऽहमि त्यात्मानं शिवं साक्षात्करोति, स शरणो वीरशैवः नित्यशुद्धबुद्धपरमान परमशिवस्वरूपो भवति । शिवस्य प्रागभावाप्रतियोगित्वविशिष्टध्वंसाप्र योगित्वात् मलावरणाभावात् चिच्छक्त्यात्मकबुद्धिशक्तिविशिष्टत्वात् स तिशयितानन्दविशिष्टत्वात् । विष्ण्वादिसर्वदेवप्रकृष्टत्वाच्च शिवः नि शुद्धः बुद्धः परमानन्दः परमश्च भवति । स्वाभेदेन तदुपासकश्च तद एव भवतीत्यर्थः । 'यो यद्यथोपास्ते तत्तदेव भवति' इति श्रुतेः ॥ २६

ज्ञानं शिवमयं भक्तिः शैवी ध्यानं शिवात्मकम ।
शैवव्रतं शिवार्चेति शिवयोगो हि पंचधा ॥

इत्युक्तप्रकारेण पूर्वोक्तलिंगांगयोगात्मकशिवयोगस्य प्रधानमङ्गं शिवार्चनं तत्फलं च:—

पुरा देवाः पशुपाशाद्विमुक्ताः
शिवं संपूज्यैव हरिब्रह्मादयोऽपि ॥ २७ ॥

पुरेति । पुरा पूर्वं हरिब्रह्मादयो देवा अपि शिवं शिवलिंगं संपूज्यैव सम्यगर्चयित्वैव पशुपाशात् पशूनां पाशात् पशुत्वापादकात्पाशादित्यर्थः । शुद्धशिवांशानां मलात्मकपाशबद्धत्वे पशुत्वात् 'मलावृतः संसारी' इति शिव सूत्रस्थितेः । विमुक्ताः विशेषेण पुनः पाशबन्धनं यथा न स्यात्तथा मुक्ताः विसृष्टाः भवन्ति संपूज्यैवेत्येवकारेण सांगशिवार्चनेनैव मुक्तिर्नान्यथेति सूचितं । ऋग्वेदेऽपि देवानां शिवार्चनमुक्तं 'तव श्रिये मरुतोऽर्चयन्तः रुद्र यत्ते जनिम चारुचित्रं पदं यद्विष्णोरुपमं न्यधायि' अस्यार्थः— भो रुद्र मरुतः ब्रह्मादयो देवाः श्रियै विष्णोः पदं स्थानं वैकुण्ठादिकमुपमं दृष्टान्तं न्यधायि निधाय चारु मनोहरं चित्रं विचित्रं सौवर्णमणिमयराजतताम्रकांस्यकादिनानाप्रकारं जनिम आविर्भावस्थानं लिंगमर्चयन्तः अर्चितवन्त इत्यर्थः । तथा यजुर्वेदे 'त्र्यम्बकं यजामहे' इत्युक्तम् । उक्तं च शिवधर्मे—

यस्य लिंगं समभ्यर्च्य मरुतः सकला अपि ।
प्रपेदिरे श्रियः पूर्णास्ते पूज्या सर्वचेतनैः ॥

इति । उक्तं च सिद्धान्तशिखामणौ—

ब्रह्मादयः सुराः सर्वे मुनयः शौनकादयः ।
शिवलिंगार्चनादेव स्वं स्वं पदमवापिताः ॥

यकारस्य ओंकारे प्रविलापनात् । तादृशयकारस्य ओंकाररूपत्वात् । सुष्ठूक्तं 'योयं यकारस्तदिदं समस्तमो'मिति ।

नन्वत्र यकारस्य प्रणवाभिन्नत्वोक्त्या स्थलपञ्चकमेवोक्तम् । स्थलषट्कं तु तत्र तत्रानुभवसूत्रादिग्रन्थेषु प्रतिपाद्यते । प्रतिपाद्यतां का हानिरिति चेत्तैक्त साकं विरोधः स्यादिति चेन्न । षष्ठस्यापि महालिंगस्य ओंकारवाच्यस्यात्रोप वात् । अत्र प्रणवस्य सूक्ष्मस्थूलव्यष्टिप्रतिपाद्यसूक्ष्मस्थूलाचारादिलिंगरू त्सद्योजातादिपंचब्रह्मणां पंचब्रह्मसमष्टिरूपे महालिंगे ओंकारवाच्ये प्रवि-लापनापरपर्यायसामरस्यविधानात् । न ह्यत्र प्रवृत्तिमार्गेण 'तस्माद्वा एत-स्मादात्मन आकाशः संभूतः' इत्यादाविव शुद्धचिच्छक्त्यात्मकमहालिंगादि क्रमेण षट्स्थलाविर्भावो विधीयते । किन्तु निवृत्तिमार्गेण कार्यसहिताचारादि लिंगानां तत्तदूर्ध्वलिङ्गे सामरस्यं विधीयते । तस्मात् षष्ठमपि स्थलमोंकार-वाच्यं सर्वाधिष्ठानं महालिङ्गमुक्तमेव । परब्रह्ममहालिङ्गमेकमेवोपासकानुग्रहार्थं पंचधा वर्तमानो भवति शरीरे पृथिवीतत्त्वाद्यभिमानित्वेनोपासकपंचक त्वात् । तादृशमहालिङ्गसहितानि सद्योजातादिपंचब्रह्माण्येव षड्विधलिंगस्थलानि भवन्ति । उक्तञ्च सूतसंहितायां ज्ञानयोगखण्डे त्रयोदशाध्याये—

एक एव शिवस्साक्षात्सत्यज्ञानादिलक्षणः ।
विकाररहितः शुद्धः स्वशक्त्या पंचधा स्थितः ॥

इति । अथर्वशिरसि 'येनेदं पंचविधं सर्वं' इति । ब्रह्मजाबालोपनिषदि सद्योजातात्पृथिवीति वामदेवादुदकमिति अघोराद्वह्निरिति तत्पुरुषाद्वायुरिति ईशानादाकाश इति पंचब्रह्मेभ्य उत्पत्तिर्भूतानामुच्यते । तैत्तिरीये नारा-यणवल्यां 'स वा एष पुरुषः पंचधा पंचात्मा येन सर्वमिदं प्रोतं' इति । ज्ञानयोगखण्डे त्रयोदशाध्याये —

आकाशाख्यं महाभूतमीशानः परिकीर्तितः ।
वायुस्तत्पुरुषो ज्ञेयः वह्निश्चाघोर एव हि ॥
आपो वामस्तथा भूमिः सद्योजातः प्रकीर्तितः ।

इति । उक्तं च वाच्यवाचकयोरभेदोऽपि पञ्चब्रह्मोपनिषदि—

पञ्चाक्षरमयं शंभु परब्रह्मस्वरूपिणम् ।
नकारादियकरांतं ज्ञात्वा पंचाक्षरीं जपेत् ॥

इति । उक्तं च क्रियासारे नकारादीनमाकारादिजन्यत्वम्—

अकारादिक्रमेणैव नकारादि यथाक्रमम् ।
अस्मात्पञ्चाक्षरी जाता मात्रिका पंचभेदतः ॥

इति स्वशक्तिक्षोभविभक्तमहेश्वरभास्करकिरणरूपो जीवात्मा भक्ताद्यङ्गस्थलपंचकरूपो भवति । पृथिव्याद्यभिमानित्वात् । पृथिव्याद्यधिष्ठितावच्छिन्नचैतन्यरूपः परमात्मा शिव एव सद्योजातादिक्रमेणाचारादिलिंगस्थलपंचकरूपो भवति अंगपंचकोपासनार्थत्वात् । उक्तं च योगशिखोपनिषदि—

एकस्तम्भे नवद्वारे त्रिस्थूणे पंचदैवते ।
एवंविधशरीरे तु मतिमानुपलक्ष्यते ॥

इति । उक्तं च सूतसंहितायां—

कार्यं ब्रह्मा महीभागे कार्यं विष्णुर्जलांशके ।
वह्निभागे तथा रुद्रो वाय्वंशे चेश्वरः स्थितः ॥
आकाशांशे शरीरे तु साक्षादेव सदाशिवः ॥

इति श्रुतिपुराणवाक्यकदम्बात् । शरीरे प्रतिदेहाभिमानिजीवात्मा एक एव पृथिव्यादिपंचभूताभिमानित्वेन भक्तमाहेश्वरप्रसादिप्राणलिंगिशरणापर

पर्यायंब्रह्मविष्णुरुद्रेश्वरसदाशिवदेवतानामभिर्वर्तते । तत्तल्लिंगे तत्तदंगसामरस्यो-पासनाविच्छेदितपृथिव्यादिग्रन्थेः शुद्धशिवांशरूपस्य केवलस्यात्मन ऐक्यांगस्थलरूपत्वात् । तादृशशुद्धात्मैव षष्ठमैक्यांगस्थलं भवति ॥

नन्विदं षष्ठस्थलस्वीकरणमयुक्तं प्रयोजनविरहात् उपात्तशिवैक्यरूपपरमप्रयोजनस्यात्मनः फलांतराभावात् भक्त्याद्यंगस्थलपंचकस्य तु आचारादिलिंगस्थलपंचकसामरस्यात्मकप्रयोजनवत्त्वात् । सर्वोत्तरैक्यस्थलस्य तदितरसाधनरूपस्थलसाध्यत्वात् । उक्तं च स्कान्दे—

पूर्वपूर्वं साधनं स्यात्साध्यं स्यादुत्तरोत्तरम् ।
उत्तरोत्तरवैशिष्ट्यमेतेषां परिकीर्तितम् ॥

अभ्यस्य पूर्वपूर्वं तदुत्तरोत्तरमाश्रयेत् ।
आश्रित्य चोत्तरं मर्त्यः स्थलं पूर्वं परित्यजेत् ॥

एतानभ्यस्यतः पुंसो मुक्तिः पाणितले स्थिता ।
न तस्य दुर्लभं किंचित् त्रिषु लोकेषु विद्यते ॥

इति । उक्तञ्चान्यत्र—

जगतः पंचकं वीजं पंचकस्य चिदद्वयम् ।
यद्वीजं तत्फलं विद्धि तस्माद्ब्रह्ममयं जगत् ॥

इति । अत एव शिवाद्वैतकल्पलतिकाकारेण स्थलपंचकमेव स्वीकृतमिति चेदुच्यते । षष्ठस्थलस्वीकरणे यद्यपि फलान्तरं नास्ति तथापि फलरूपस्याप्यैक्यस्य शुद्धात्माङ्गस्य षष्ठस्य स्वीकरणीयत्वात् । यथा सिद्धान्तशास्त्रे षष्ठस्थलं फलमपि स्वीकृतमंगमिति तथैव फलरूपस्यापि समाधेरष्टमांगत्वस्य स्वीकृतत्वात् । तदुक्तं पातञ्जलदर्शने यमनियमासनप्राणायामप्रत्या-

हारध्यानधारणसमाधयोऽष्टावंगानि इति ।" उक्तं चान्यत्र—

षडंगयोगमार्गेण साध्यो विश्वविदव्ययः ।

इति ।" तस्मात् षष्ठांगस्यैकस्य साधनत्वायोगेऽप्यंगमिति व्यवह्रीयते ।
अत्रोक्तषडंगयोगस्याभ्यास एव कार्यो वीरशैवैः न तु पातञ्जलोक्ताष्टांगाभ्यास
इति न भ्रमितव्यम् । षडंगयोगेऽष्टांगयोगस्यान्तर्भावात् । तदुक्तं लिंग-
पुराणे उत्तरभागे दीक्षादिकथनं नाम एकविंशतितमेऽध्याये--

यमेन नियमेनैव मन्ये भक्त इति स्वयम् ।
स्थिरासनसमायुक्तो माहेश्वरपदान्वितः ॥
चराचरलयस्थानं लिंगमाकाशसंज्ञकम् ।
प्राणी तद्व्योम्नि संलीने प्राणलिंगी भवेत्पुमान् ॥

प्रत्याहारेण संयुक्तः प्रसादीति न संशयः ।
ध्यानधारणसंयुक्तः शरणस्थलवान्सुधीः ॥
लिंगैक्योऽद्वैतभावात्मा निश्चलैकसमाधिना ।
एवमष्टांगयोगेन चिरजीवी भवेन्नरः ॥

तस्मात्सर्वप्रयत्नेन कर्मणा ज्ञानतोऽपि वा ।
सदा चाष्टांगमार्गेण शिवपूजां समभ्यसेत् ॥

इति । इदमत्र शिवयोगरहस्यं लिंगधारणदीक्षासम्पन्नो वीरशैवः भूति-
रुद्राक्षधारणसंयुतः सन् सोपांगयमनियमांगसंपन्नो यदि स्यात्तदा प्रथमसोपान-
भूतभक्तस्थलारूढो भवति । षडाधारेषु दीक्षाकाले श्रीगुरुस्थापितनकाराद्यो-
कारान्तानि षडक्षराणि पुनःपुनः स्थापयित्वा ध्यात्वा च नकारादि वाच्याचारा

दिर्लिंगानि सूक्ष्मस्थूलात्मकपंचाक्षरमन्त्रजपासक्तः स्थिरासनसंयुतश्चेत् द्वितीयसोपानभूतमाहेश्वरस्थलारूढो भवति । प्राणायामाभ्यासेन प्राणकलायाः चिदाकाशसंज्ञितप्राणलिंगे संलीनत्वे चित्कलारूपत्वात् तादृशचित्कलां मनोदृष्टि द्वारा करगतेष्टलिंगे विभावयेत् । तादृशभावनासक्तश्चेत्तृतीयसोपानभूत-प्राणलिंगिस्थलारूढो भवति । बाह्यविषयव्यावृत्या च करगतेष्टलिंगैकभावनया तत्पूजापरश्चेत् शुद्धचित्तः चतुर्थसोपानभूतप्रसादिस्थलारूढो भवति । ततश्च तदिष्टलिंगस्य बाह्याभ्यन्तरध्यानधारणसमर्थः सन् बाह्याभ्यन्तर विषयविस्मृतिकाले वस्तुतः पदार्थसमर्पणवान् भवति । तदर्पणवान् पंचम सोपानभूतशरणस्थलारूढो भवति । निश्चलशिवाद्वैतसमाधिसंपन्नः सन् शिवार्पितशुद्धात्मा मुक्त इत्यर्थः षष्ठांगशिवैक्यस्थलारूढो भवति । उक्तश्च मकुटागमे नकारादिवाच्याचारादिलिंगेषु योगक्रमः ।

षडाधारेषु सर्वेषु प्रणवादिषडक्षरं ।
स्थापयित्वा सदा स्मृत्वा जपेत्पंचाक्षरं शुभम् ॥

अथवापि षडाधारे मणिदीपं प्रकल्पयेत् ।
अथवा लिंगरूपेण क्रमादाधारमण्टपे ॥

प्रभारूपेण संस्मृत्य जपेन्मन्त्रं षडक्षरम् ।

इति । उक्तं च शिवरहस्ये—

चतुर्दलं तदाधारं वादिसान्ताक्षरान्वितम् ।
कर्णिकान्तर्नकाराढ्यं क्रियाशक्त्यरुणप्रभम् ॥

स्वाधिष्ठानस्य षट्पत्रं वादिलान्ताक्षरान्विम् ।
डादिफांताक्षरोपेतं दशपत्रं शिकर्णिकम् ॥

चक्रस्यानाहतस्यादिशक्तेर्द्वादश पल्लवाः ।
कादिडान्ताक्षरं स्वर्णवर्णं वार्णाढ्यकर्णिकम् ।।

विशुद्धिश्च पराशक्तिर्ज्योतिर्वर्णो द्विरष्टकं ।
पत्रं वर्णास्त्वकाराद्या द्विरष्टोयार्णकर्णिका ।।

तथा ज्ञेयस्य चिन्छक्तिर्द्विदलं हंक्षवर्णकम् ।
प्रणवः कर्णिकामध्ये समुद्यद्वैद्युतप्रभम् ।।

इति । तस्मादत्र षट्चक्रेषु कमलेषु सदलेषु क्रमेण कर्णिकान्तर्नकाराद्योंकारान्तषडक्षरात्मकाचारादिलिंगसामरस्योपासना विहितेति बोध्यम् ।

किञ्च सिद्धान्तशिखामणावप्युक्तमेव शिवयोगसमाधिस्थले---

अन्तःषट्चक्ररूपाणि पंकजानि विभावयेत् ।
ब्रह्मादिस्थानभूतानि भ्रूमध्यान्तानि मूलतः ॥

इति । एवं च भक्ताद्यंगानामाचारादिलिंगेषु सामरस्यात्मकाभेदविषयकसंवृद्ध्या स्थिरीकृते ब्रह्मादिबन्धकसर्वपृथिव्यादिहृदयग्रन्थीनां विप्रमोक्षोभवति—'आहारशुद्धौ सत्वशुद्धिः सत्वशुद्ध्य ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इतिश्रुतेः ।

छिद्यते हृदयग्रन्थिर्भिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इति च श्रुतेः । इत्थं च मुमुक्षूणां तृणीकृतस्वर्गादिफलानां वीरशैववीरमाहेश्वरदीक्षासंपन्नानामवीनत्वेदवेदाङ्गानां वीरशैववीरमाहेश्वराणां शिष्याणा

ईशानं परमं विद्यात् प्रेरकं बुद्धिसाक्षिणम् ।
आकाशात्मकमव्यक्तमोङ्कारस्वरभूषितम् ॥ इति ।

ईशानः ईशानाख्यं ब्रह्म भवति वाच्यवाचकयोरभेदात् । स एव यकारः आकाशः आगमश्च भवति तयोः प्रणवाभिन्नयकारवाच्येशानब्रह्म जन्यत्वात् । तथाच स्मृतिः—

अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।
आदिकर्ता शिवः साक्षाच्छूलपाणिरिति श्रुतिः ॥
सद्योजातेन ऋग्वेदं वामदेवेन याजुषम् ।
अघोरेण तथा साम पुरुषेण त्वथर्वणम् ॥
ईशानेन मुखेनैव कामिकाद्यागमांस्तथा ।
जनयामास विश्वेशः सर्वसिद्धिप्रदायकः ॥

इति ॥ स आगमः लिंगं लिङ्गस्वरूपः उच्यते । आगम इत्येकवचनं जात्यभिप्रायकं यथा लिंगं संपुटतद्वृतिवस्त्रादिना रक्षणीयं तथा आगमस्यापि ऋगादिना रक्षणीयत्वाद्यथा लिङ्गाभावे संपुटादीनां वैयर्थ्यं तथा-आगमाभावे ऋगादीनां वैयर्थ्याल्लिङ्गस्यागमत्वेन ऋगादीनां संपुटादित्वेन। रूपकं कृतं श्रुतिदेव्या ।

ननु यकारौङ्कारयोरुक्तमभिन्नत्वं कथं संगच्छते इतिचेद् ब्रूमः नकारादिवकारान्तानां यकारे प्रविलापनात् । यकारस्य ओंकारे विलयात् संगच्छत एव ।

ननु तथापि सगुणब्रह्मवाचकस्य नकाराद्यक्षरचतुष्टयगर्भवकारस्य निर्गुणब्रह्मवाचकस्य ओंकारस्य च कथमभेदस्तयोर्वाच्यार्थयोर्भिन्नत्वादिति चेन्न

नीरूपस्यैव ब्रह्मणो महालिङ्गस्य साधकानुग्रहार्थमाकारविशेषस्य स्वीकर्तव्यत्वात्। निर्गुणस्य साधनानर्हत्वात्। आरुरुक्षुतावस्थायां नकादियकारान्तवाच्यसगुणब्रह्मोपासनाया विधानात् सगुणनिर्गुणोभयसाधारण्येन संसारदावानलसंरितप्तानां पाशविच्छेदार्थं षडक्षर्यास्तारकत्ववर्णनात्। सगुणेऽन्यन्निर्गुणेऽन्यदिति वैयधिकरण्येन तारकत्वानौचत्यात्। निर्गुणोपासनायामशक्तोऽपि सगुणोपासनावसरे नित्यप्राप्तायाः प्रणवविशिष्टपञ्चाक्षर्या एव वाचकत्वेन सगुणब्रह्मानुशील्य उपासनां कुर्यात्।

यत्तु सगुणोपासनायां पञ्चाक्षर्याः षडक्षर्या एव वा यत् वाच्यवाचकयोरभेदोपासनम्, निर्गुणोपासनायां तु प्रणवमात्रस्य वाच्यवाचकयोरभेदोपासना इति। तत्तुच्छं वस्तुतः सगुणनिर्गुणयोर्भेदाभावात्। साधकानुग्रहार्थमाविर्भूतशक्तेः परमेश्वरस्योभय‍साधारण्येन प्रणवविशिष्टपञ्चाक्षर्यास्तारकत्वात् प्रविलापितनकारादिचतुष्टययकारौङ्कारवाच्यार्थयोः सगुणनिर्गुणयोर्भेदाभावात्।

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनमः॥

इति श्रुतेः॥

उक्तं चान्यत्र पञ्चाक्षरवाच्यपञ्चब्रह्मात्मकत्वमोंकारवाच्यमहालिङ्गस्य—

महालिङ्गाय ते पञ्चब्रह्मणे नम आत्मने।
पराभूतिप्रकाशाय ओंकारमनुमूर्तये॥

इति नकारादियकारान्तपञ्चाक्षरमन्त्रस्य अकारादिनादान्तगर्भमूलप्रणवजन्यत्वात्। लिङ्गाङ्गसामरस्यचिन्तनावसरे तत्तदङ्गानां तत्तल्लिंगे पञ्चाक्षरवाच्ये तस्य तस्य लिंगस्य तस्य तस्योपरि वर्तमानलिंगे प्रविलापनवत् तद्वाचकनकारादीनामपि तत्तदुपर्यों [illegible] चिन्तनीयत्वान्नकारादिचतुष्टयगर्भ

इति। उक्तश्च लिङ्गार्चनक्रमः लिंगपुराणे उत्तरभागे दीक्षादिकथनं ककविंशतितमेऽध्याये—

मुने वक्ष्ये विशेषेण श्रुणु लिंगार्चनक्रमम् ॥ १४२ ॥

पूजोपचारविधिना षट्त्रिंशद्भेदमीरितम् ।
पूजा द्वादशधा प्रोक्ता शिवसिद्धान्ततत्परैः ॥

उपचारास्तथा चैव चतुर्विंम्शद्विधाः स्मृताः ।
विभूत्यभ्युक्षणं लिंगे करणं स्नपनस्य च ॥

अंगारतापनं चैव धूपसंजीवनं ततः ।
धूपप्रसारणं चैव ततो गंगावतंसनम् ॥

अक्षतारोपणं चैव पुष्पोपहरणं ततः ।
दीपप्रकाशनं चैव नैवेद्यान्नसमर्पणम् ॥

ताम्बूलस्य प्रदानं च वस्त्रप्रावरणं ततः ।
एवं द्वादशधा प्रोक्ता शिवलिंगार्चनक्रिया ॥

आवाहनासनार्घ्याणि पाद्यमाचमनं ततः ।
यज्ञोपवीतमाल्यानुलेपनाभरणानि च ॥

छत्रं च चामरं चैव तालवृन्तं च दर्पणम् ।
घण्टा शंखश्च गीतं च वाद्यं नृत्तं प्रदक्षिणम् ॥

नमस्कारःस्तुतिर्याच्ञाविज्ञप्तिस्तु विसर्जनम् ।
इत्येवमुपचाराश्च चतुर्विंम्शद्विधाः स्मृताः ॥

समर्चनोपचाराणां षट्त्रिंशद्भेदभेदतः ।
षट्त्रिंशत्तत्त्वमय्येषा शैवी श्रुतिरिति स्थितिः ॥

अथार्चनौपचाराणां योगक्रम उदीर्यते ॥
भस्मस्नानादिभिः शुद्धीकरणं विधिवत्ततः ।

संवित्पंचाक्षरीमन्त्रानुष्ठानं तत आसनम् ।
कराब्जपीठरूपेण तत आवाहनं परम् ॥

आनीयांगस्थलाल्लिंगं प्रवेशस्तत्करस्थले ।
विभूत्यभ्युक्षणं नित्यं समन्त्रकमनन्तरम् ॥

अर्घ्यादिशैवसामान्यं ततः स्नपनकर्म च ।
अंगारतापनादीनि दश चोक्तानि पूर्ववत् ॥

ततो यज्ञोपवीतादि विज्ञप्त्यन्ता यथायथम् ।
विसर्जनं करस्थस्य लिंगस्यांगे निवेशनं ॥

एवं लिंगार्चनं यस्तु कुरुते भक्तिपूर्वकम् ।
तस्य पुण्यफलं सम्यग्वक्तुं नालं चतुर्मुखः ॥

लिंगमध्ये महादेवः साक्षान्नित्यं व्यवस्थितः ।
अनुग्रहाय लोकानां तस्माल्लिंगं प्रपूजयेत् ॥

इति । अत्र विभूत्यभ्युक्षणादिना पृथिव्याद्यशुद्धतत्त्वानां शुद्धिर्जायत इत्यन्यत्रोक्तम् । इदमत्र रहस्यं पृथिव्याद्यंशरूपविभूत्यादीनामभ्युक्षण स्नपनादिना पृथिव्याद्यंशितत्त्वानामर्पणे संभवति सति लिंगार्पितशेषप्रसादभाव-

इति। उक्तश्च लिङ्गार्चनक्रमः लिंगपुराणे उत्तरभागे दीक्षादिकथनं
कविंशतितमेऽध्याये—

मुने वक्ष्ये विशेषेण श्रुणु लिंगार्चनक्रमम् ॥ १४२ ॥

पूजोपचारविधिना षट्त्रिंशद्भेदमीरितम् ।
पूजा द्वादशधा प्रोक्ता शिवसिद्धान्ततत्परैः ॥

उपचारास्तथा चैव चतुर्विंम्शद्विधाः स्मृताः ।
विभूत्यभ्युक्षणं लिंगे करणं स्नपनस्य च ॥

अंगारतापनं चैव धूपसंजीवनं ततः ।
धूपप्रसारणं चैव ततो गंगावतंसनम् ॥

अक्षतारोपणं चैव पुष्पोपहरणं ततः ।
दीपप्रकाशनं चैव नैवेद्यान्नसमर्पणम् ॥

ताम्बूलस्य प्रदानं च वस्त्रप्रावरणं ततः ।
एवं द्वादशधा प्रोक्ता शिवलिंगार्चनक्रिया ॥

आवाहनासनार्घ्याणि पाद्यमाचमनं ततः ।
यज्ञोपवीतमाल्यानुलेपनाभरणानि च ॥

छत्रं च चामरं चैव तालवृन्तं च दर्पणम् ।
घण्टा शंखश्च गीतं च वाद्यं नृत्तं प्रदक्षिणम् ॥

नमस्कारःस्तुतिर्याच्ञाविज्ञप्तिस्तु विसर्जनम् ।
इत्येवमुपचाराश्च चतुर्विंम्शद्विधाः स्मृताः ॥

समर्चनोपचाराणां षट्त्रिंशद्भेदभेदतः ।
षट्त्रिंशत्तत्त्वमध्येषा शैवी श्रुतिरिति स्थितिः ॥

अथार्चनोपचाराणां योगक्रम उदीर्यते ॥
भस्मस्नानादिभिः शुद्धीकरणं विधिवत्ततः ।

संवित्पंचाक्षरीमन्त्रानुष्ठानं तत आसनम् ।
कराब्जपीठरूपेण तत आवाहनं परम् ॥

आनीयांगस्थलाल्लिंगं प्रवेशस्तत्करस्थले ।
विभूत्यभ्युक्षणं नित्यं समन्त्रकमनन्तरम् ॥

अर्घ्यादिशैवसामान्यं ततः स्नपनकर्म च ।
अंगारतापनादीनि दश चोक्तानि पूर्ववत् ॥

ततो यज्ञोपवीतादि विज्ञप्त्यन्ता यथायथम् ।
विसर्जनं करस्थस्य लिंगस्यांगे निवेशनं ॥

एवं लिंगार्चनं यस्तु कुरुते भक्तिपूर्वकम् ।
तस्य पुण्यफलं सम्यग्वक्तुं नालं चतुर्मुखः ॥

लिंगमध्ये महादेवः साक्षान्नित्यं व्यवस्थितः ।
अनुग्रहाय लोकानां तस्माल्लिंगं प्रपूजयेत् ॥

इति ।। अत्र विभूत्यभ्युक्षणादिना पृथिव्याद्यशुद्धतत्त्वानां शुद्धिर्जायत इत्यन्यत्रोक्तम् । इदमत्र रहस्यं पृथिव्याद्यंशरूपविभूत्यादीनामभ्युक्षण स्नपनादिना पृथिव्याद्यंशितत्त्वानामर्पणे संभवति सति लिंगार्पितशेषप्रसादभाव-

नैव षडध्वशुद्धवीरशैवेन पुनः पूजाकालपर्यन्तमभ्यसनीया । अन्यथा शुद्धस्य तस्याशुद्धपदार्थसंबन्धेनाशुद्धत्वप्रसंगः स्यादिति ॥

विष्णवादिदेवैः किं किं लिङ्गं पूजितमित्यत्राह—

ऐन्द्रनीलं पूजितं विष्णुनाऽऽसील्लिंगं वैदूर्यं विधिना पद्म
रागं शक्रेण हैमं यक्षराजेन विश्वेदेवैं रौप्यकं वसुभिः
कांश्यकं दारुकूटं वायुना पार्थिवं तदश्विभ्यामासीत्
स्फाटिकं पाशिना अथादित्यैस्ताम्रं मौक्तिकं दैवतैः
अनन्ताद्यैः फणिभिश्च प्रवालं दैत्यैर्जालं राक्षसैश्च त्रि
लोहं गुह्यकैः गणैः शैलं सैकतं मातृकाभिः दारूद्भवं
नैर्ऋतिना यमेन सम्पूज्यमासीन्मारकतं च रुद्रैस्सुभस्म
रूपं च लक्ष्म्या शैलान्येव मुनयो भेजिरे अथ सरस्वती
रत्नरूपं दुर्गा हैमं लिङ्गं पूजयामास भक्त्या ॥ २८ ॥

ऐन्द्रेति । विष्णुना आदिनारायणेन ऐन्द्रनीलमिन्द्रनीलरत्नमयं लिंगं शिवलिंगं पूजितमर्चितमासीत्पुरेति सर्वत्रानुषंगः । विधिना चतुर्मुखेन शिवस्य प्रथमपुत्रेण वैदूर्यं वैदूर्यरूपं लोकप्रसिद्धं लिंगं पूजितमासीदीत्यर्थः । शक्रेण इन्द्रेण पद्मरागं पद्मरागनामकमणिमयं लिंगं पूजितमासीत् । यक्षराजेन कुबेरेण हैमं सौवर्णं लिंगम् । विश्वेदेवैः देवताविशेषैः रौप्यकं राजतं लिंगम् । वसुभिः वसुदेवताभिः कांश्यकं च कांश्यरूपमिश्रधातुनिर्मितं लिंगं। वायुना वायुदेवेन दारुकूटं गोलाकारेण निर्मितं पैत्तलकं लिंगम् । दारुशब्दस्य पित्तलवाचित्वात्कूटशब्दस्य गोलवाचित्वात् ।

वायुः पूजयते नित्यं लिंगं पैत्तलकं शुभम् ।

इति स्कान्दे व्यासजैमिनिसंवादे तथैवोक्तत्वात् । अश्विभ्यां अश्वि-नामकदेवताभ्यां पार्थिवं मृण्मयं लिंगम् । वरुणेन स्फाटिकं स्फटिकशिला-निर्मितं लिंगं अथादित्यैर्द्वादशादित्यैः ताम्रं ताम्रनिर्मितं लिंगम् । दैवतैः सोमराड्नामकैः मौक्तिकं मुक्ताफलनिर्मितं लिंगम् । अनन्ताद्यैः आदिशेषा-दिभिः फणिभिश्च सर्पैश्च प्रवाळं विद्रुममयं लिंगम् । दैत्यैः दितिपुत्रैः जालं जालकमयोमयं लिंगमित्यर्थः । राक्षसैश्च रक्षोभिश्च तदेवायोमयम् । गुह्यकैः त्रिलोहं त्रिलोहनिर्मितलिंगम् । गणैः प्रमथैः वीरनन्द्यादिभिः शैलं सर्वलोहप्रचुरं श्रीशैलरूपं श्रीशैलोद्भवं लिंगमित्यर्थः । मातृकाभिः ब्राह्म्यादिसप्तमातृकाभिः सैकतं सिकतामयं लिंगम् । नैर्ऋतिना दारूद्भवं काष्ठनिर्मितं लिंगम् । यमेन मारकतञ्च मरकतमणिनिर्मितं लिंगं सुपूज्यमा-सीत् । रुद्रैः नीलादिरुद्रैः सुभस्मरूपं समीचीनभस्मरूपं लिंगमित्यर्थः । लक्ष्म्या लक्ष्मीदेव्या श्रीवृक्षरूपं बिल्ववृक्षरूपं लिंगमित्यर्थः । शैलान्येव पर्वतरूपाण्येव लिंगानि मुनयो भेजिरे पूजितवन्तः । अथ च सरस्वती भारती रत्नरूपं रत्नमयं लिंगम् । दुर्गा दुर्गादेवी हैमं लिंगं पूजयामास भक्त्या । भक्त्येति सर्वत्रानुषङ्गः ॥

लिंगभेदप्रतिपादकं चैतत्सर्वमुपबृंहितं लिंगपुराणे पूर्वभागे लिंगभेदा-दिकथननामकपंचसप्ततितमेऽध्याये—

लिंगानि कल्पयित्वैवं स्वाधिकारानुरूपतः ।
विश्वकर्मा ददौ तेषां नियोगाद्ब्रह्मणः प्रभोः ॥ १ ॥

इन्द्रनीलमयं लिंगं विष्णुना पूजितं सदा ।
पद्मरागमयं शक्रो हैमं विश्रवसः सुतः ॥ २ ॥

विश्वेदेवास्तथा रौप्यं वसवः कांश्यकं शुभम् ।
दारुकूटमयं वायुरश्विनौ पार्थिवं सदा ॥ ३ ॥

स्फाटिकं वरुणो राजा आदित्यास्ताम्रनिर्मितम् ।
मौक्तिकं सोमराड्धीमांस्तथा लिंगमनुत्तमम् ॥ ४ ॥

अनन्ताद्या महानागाः प्रवाळकमयं शुभम् ।
दैत्या ह्ययोमयं लिंगं राक्षसाश्च महात्मनः ॥ ५ ॥

त्रैलोहकं गुह्यकाश्च सर्वलोहमयं गणाः ।
चामुण्डाः सैकतं साक्षान्मातरश्च द्विजोत्तमाः ॥ ६ ॥

दारुजं नैर्ऋतिर्भक्त्या यमो मारकतं शुभम् ।
नीलाद्याश्च तथा रुद्राः शुद्धं भस्ममयं शुभम् ॥ ७ ॥

लक्ष्मीवृक्षमयं लक्ष्मीर्गुहो वै गोमयात्मकम् ।
सरस्वती च रत्नेन कृतं रुद्रस्य वाग्भवा ॥ ८ ॥

दुर्गा हैमं महादेवं सवेदिकमनुत्तमम् ' इति ॥ २७ ॥

यथावच्छिवतत्त्वज्ञानाभावेऽपि भक्त्या शिवार्चने कृते तुष्टो महेशोऽर्चकाय वांछितार्थं ददातीति शिवार्चनं प्रशंसति—

भक्त्या जलैरुष्णैश्शीतलैर्वा कदाचिदज्ञानाद्वा पतितैः
पत्रपुष्पैस्तुष्टो यच्छेद्वांछितार्थं महेशः ॥ २८ ॥

भक्त्येति । भक्त्या शिवैकविषयिण्या प्रीत्या उष्णैः शीतलैर्वा जलैः

कदाचित् यदाकदाचित् अज्ञानाद्वा शिवतत्वाज्ञानतोऽप्यभिषिक्त इति शेषः पतितैः पत्रपुष्पैः पत्राणि च पुष्पाणि च पत्रपुष्पाणि तैश्चार्चित इत्यनुसन्धेयं तत एव तुष्टस्संतुष्टो महेशः महान् ब्रह्मविष्ण्वादिभ्य ईशः ईश्वरः वांछितार्थमिष्टार्थं यच्छेत् ददातीत्यर्थः । उक्तं च देवीकालोत्तरे—

एकस्यापि च पुष्पस्य प्रदानेन महेश्वरे ।
त्रैलोक्यं वशमायाति स्वेच्छया च न संशयः ॥

इति । लिंगपुराणेऽप्युक्तम्—

गवां कोटिप्रदानेन विधिवत्तेन यत्फलम् ।
लिङ्गन्यस्तैकपुष्पस्य सहस्रांशं न पूरयेत् ॥
जलं वा पुष्पमेकं वा लिंगस्योपरि निक्षिपेत् ।
अमन्त्रं वा समन्त्रं वा कुलकोटिं समुद्धरेत ॥ इति ॥ २७ ॥

इतः परं शिवभक्तस्य महिमोच्यते—

**किं दुर्लभं शिवभक्तस्य लोके ॥ २९ ॥**

किमिति । शिवभक्तस्य वीरशैवस्य देहादौ त्यक्ताभिमानस्य भक्तस्थलापन्नस्य—

त्यक्ताभिमानो देहादौ भक्त इत्युच्यते बुधैः ।

इत्यागमोक्तेः । लोके जगति किं दुर्लभं दुष्प्रापं वर्तते न किमपीत्यर्थः । तदुक्तं क्रियासारे सप्तदशोपदेशे—

भिंदन्ति शैलानुदधीन् पिबन्ति
व्यत्यासयन्ति क्षितिमन्तरिक्षम् ।

तृणीकृतब्रह्मपुरन्दराणां
किं दुष्करं शङ्करकिङ्कराणां ॥ इति ॥

अगस्त्यः कुंभजन्मा तु शिवभक्त्यैव केवलम् ।
पपौ समुद्रमतुलं शिवशक्त्युपबृंहितः ॥ इति च ॥ २९ ॥

शिवभक्तप्रशंसानन्तरं शिवभक्तस्वीकरणीयपादोदकप्रसादं चाह—

अत्यल्पमपि नैवेद्यं फलं वा जलमेव वा ।
तदेव प्राशयित्वाथ ब्रह्मभूयाय कल्पते ॥ ३० ॥

अत्यल्पमिति । अत्यल्पमपि स्वल्पमपि स्वभोजनापर्याप्तमपि नैवेद्यं शिवसमर्पणयोग्यं निवेदनशब्दस्यार्पणपरत्वात् ।

निवेदनं पदार्थस्य शिवायैतत्समर्पणम् ।

इत्युक्तेः मनसा शिवोद्देशेन संपादितमन्नादिकं नैवेद्यमित्यर्थः । फलं वा जलमेव वा प्राशयित्वा भक्षयित्वा अथ अनन्तरं तदेव शिवोपभुक्तशेषमेव निर्माल्यं भुञ्जन् मुमुक्षुर्वीरशैवो ब्रह्मभूयाय ब्रह्मत्वाय शिवत्वाय ब्रह्मस्वरूपं गन्तुमित्यर्थः कल्पते शक्तो भवति । 'स्याद्ब्रह्मभूयं ब्रह्मत्वम्' इत्यमरोक्तेः । निर्माल्यं विभक्तं षोढा । कामिकागमे—

शिवानुभूतमखिलं निर्माल्यं परिभाष्यते ।
भोज्यं धार्यमिति द्वेधा षड्विधं च तदिष्यते ॥

देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम् ।
चण्डद्रव्यं बहिःक्षिप्तं निर्माल्यं षड्विधं स्मृतम् ॥

देवस्वं ग्रामभूम्यादि दासीदासचतुष्टयम् ।
हेमरूप्यकरत्नादि देवद्रव्यमिति स्मृतम् ॥

मनसा यच्छिवोद्दिष्टद्रव्यं नैवेद्यमुच्यते ।
शिवोपभुक्तस्रग्गन्धमन्नपानादिकं तथा ॥
निवेदितमिति प्रोक्तं सुरैर्वा मुनिभिर्नरैः ।
प्रतिष्ठितस्य लिंगस्य नैवेद्यं यत्समर्पितम् ।
तच्चण्डद्रव्यमित्युक्तं पूर्वसन्ध्यासमर्पितम् ।
पत्रं पुष्पं बहिःक्षिप्तमिति षड्विधमुच्यते ॥

इत्येतेषु षड्विधेषु निर्माल्येष्विष्टलिंगनिवेदितमेव वीरशैवानां प्रसाद-भोक्तॄणामर्हं नान्यदिति तदेवेत्यत्रैवकारेण सूचितमिति मन्तव्यम् । तथाचात्मनोपभोक्तव्यानि सर्वाणि भक्ष्यभोज्यलेह्यचोष्यखाद्यपेयानि द्राक्षा-रंभाचूतादिफलानि क्षीरोदनमुद्गोदनशाल्योदनादिबह्वोदनानि कन्दमूलशाका-दिव्यञ्जनानि पयोदधिघृतादिरसानि अन्यानि च षड्रसोपेतपदार्थजातानि शिवार्पितानि कृत्वा तद्भुक्तशेषप्रसादस्य प्राशनमेव कुर्यान्न तु तदसमर्पितस्य स्वभोजनपर्याप्तस्याधिकान्नादेस्तदितरसमर्पितस्य वा । तथैवोक्तमीशावास्यो-पनिषद्यपि—

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुंजीथा मागृधः कस्यस्विद्धनम् ॥

इति । अस्यार्थस्तु मत्कृत ईशावास्योपनिषद्व्याख्यायां द्रष्टव्यः । न च गुरुजंगमयो-रपि शिवेतरत्वात्तत्पादोदकप्रसादग्रहणस्याप्यनौचित्यं स्याद्वीरशैवानामिति वाच्यम् । तयोः शिवेतरत्वाभावात् ॥

ननु लिङ्गादपि गुरोः गुरोरपि जङ्गमस्याधिक्यवर्णधारकत्थंशिवाभिन्नत्वं गुरु जंगमयोर्वक्तुं शक्यते इति चेन्न 'न तत्समश्चाप्यधिकश्च दृश्यते' इत्यादिश्रुति-

विरोधात् । एतच्छ्रुतिबोधितशिवसाम्यशिवाधिक्यनिषेधस्य प्राबल्यात् । तथाप्याधिक्यसाम्यवर्णनांगीकारे—

वेदसिद्धान्तयोरैक्यमेकार्थप्रतिपादनात् ।
प्रामाण्यं सदृशं ज्ञेयं पंडितैरेतयोः सदा ॥

इत्यादि सिद्धान्तशिखामण्यादिवाक्यानामप्रामाण्यमापद्येत ॥

ननु 'जङ्गमाधिक्यमुच्यते' इत्यादिसिद्धान्तशिखामणिवाक्यस्य का गतिरिति चेत्तद्वाक्य जङ्गममाहात्म्यस्थलोक्तं जङ्गमपादोदकप्रसादग्रहणे प्रवर्तकं प्रसंशापरं न तु तदाधिक्यं विधत्ते इति बोध्यम् । अन्यथा तदुत्तरभक्तमाहात्म्यस्थले— 'शिववन्मान्य एव सः' इत्यादिना भक्ताधिक्यस्यापि वर्णनात् जङ्गमादपि भक्तस्याधिक्यं स्यादेव । तस्माल्लिंगादितत्तन्माहात्म्यस्थले तत्तदाधिक्यकथनन्तु तत्तत्पूजादिप्रवर्तनार्थमिति ध्येयम् । गुरुलिङ्गजङ्गमेषु न्यूनधिकभावे सत्यवश्यं तेषां परस्परं भेदः स्यात् स्याच्च तद्भेदकृतः प्रत्यवायोऽपि । तदुक्तं क्रियासारे मुख्योपदेशचतुष्टयांतर्गत तृतीयोपदेशे—

मनो यस्य तु संलग्नं शिवे चैव चरे गुरौ ।
स विज्ञानी च वेदान्तज्ञानी श्रुतविभागवान् ॥

यैर्भेददृष्ट्या मर्त्यत्वं गुरोर्लिङ्गस्य चाश्मता ।
कल्पिताऽज्ञाततत्त्वास्ते तत्त्वज्ञानपराङ्मुखाः ॥

गुरोश्चरस्य चाभेदं लिंगस्य च तथाऽभिदाम् ।
यो जानाति स एवासौ नीलकण्ठो भवेद्बुधः ॥

अस्मत्प्रमाणजालं तु जागर्ति किरणागमे ॥

इति । अत एव सिद्धान्तशिखामणौ गुरुलिंगजङ्गममाहात्म्यस्थले गुरु

लिंगजङ्गमानाम्—'यत्साक्षादपरोक्षाद्ब्रह्म' 'शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य' इत्यादि श्रुतिपरिपाद्यपरशिवाब्रह्माभिन्नत्वमुक्तम्। 'यः शिवः स गुरुर्ज्ञेयः' इत्यादिना निष्कलशिवाभिन्नत्वं गुरोः।

'परं पवित्रममलं लिंगं ब्रह्म सनातनम्'

इत्यादिनेष्टलिंगस्य 'ते हि साक्षाच्छिवात्मकाः' इत्यनेन जङ्गमस्य च। तथा च गुरुलिंगजङ्गमेषु रेणुकभगवत्पादानां न्यूनाधिकभावविषयकतात्पर्याभावात् तदभेदे तात्पर्यमिति सुस्पष्टम्॥

किञ्च तेष्वेकस्यैकस्मादपकृष्टत्वे कृतेऽवश्यमेकस्यावमानःस्यात्। स्याच्च तत्कृतप्रत्यवायस्तेन च भोगमोक्षात्मकश्रेयोहानिस्तदुक्तं क्रियासारे तृतीयोपदेशे 'भेदकृत्पापमश्नुते' इति। सिद्धान्तशिखामणौ च—

आचार्यस्यावमानेन श्रेयःप्राप्तिर्विहन्यते।
तस्मान्निश्रेयसःप्राप्त्यै पूजयेत्तं समाहितः॥

इति। तस्माद्येन केनापि प्रकारेणाचार्यस्यावमाने कृतेऽवश्यं श्रेयोहानिर्भवतीति बालिशैरपि ज्ञायमानत्वात् तद्भेदाभ्युपगमजनितप्रत्यवायविध्वस्तश्रेयांसः सन्तो घोरापारसंसारतापत्रयानलेन दह्यमाना भवन्ति तद्भेदवादिन इत्यतो यत्र कुत्रापि लिंगगुरुजङ्गमापकृष्टत्वप्रकृष्टत्वपरवाक्यसत्त्वे तेषां वाक्यानां 'जंगमाधिक्यमुच्यते' इत्यादिवाक्यानामिव प्रशंसापरत्वमेवेति बोध्यम्॥

किञ्च सिद्धान्तशिखामणौ कुत्रापि लिंगगुरुजंगमानां क्रमेण लिंगादपि गुरोः गुरोरपि जंगमस्याधिक्यमिति नोक्तं किन्तु तत्तन्माहात्म्यस्थले तत्तदाधिक्यमुक्तं तत्तु तत्तत्प्रशंसार्थमिति कुतो न जानन्तीत्याश्चर्यम्॥

ननु तथा तत्रानुक्तावपि—

'चरमूर्तेर्गुरुत्वं हि गुरोरप्यधिकं भवेत्'

इत्युक्तं क्रियासारे अष्टविंशोपदेशे इति चेत्, उच्यते एतद्वाक्यं यदि प्रक्षिप्तं न स्यात्तथापि चरमूर्त्याधिक्यपरमिति वक्तुं न शक्यते कुतः आगमेषु गुरुपादोदकसेवनस्य बहुशः प्रतिपादनात् गुरुपादोदकग्रहणमेव कर्तुमुचितमिति कश्चिज्जानीयादित्याशयेन चरमूर्तेरपि पादोदकं सेवनार्हं भवतीति बोधनार्थं 'चरमूर्तेर्गुरुत्वं हि' इत्यादिकमुक्तं चरमूर्तिप्रशंसापरमिति मन्तव्यं तद्व्यक्तं पूर्वश्लोके—

तस्मादागमवाक्येषु बहुशः प्रतिपादनात् ।
सिद्धं गुरुपदोदस्य धारणं पानमेव हि ॥

चरपादोदकं चापि'

इत्यत्रापि नापिच अन्यथा 'भेदकृत्पापमश्नुते' इति किरणागमानुसारतः पूर्वोक्तं प्रत्यवायबोधकप्रबलवाक्यं कथं संगच्छते ? तस्मात्—

'वागद्वैतं न कार्यं हि कार्यमाचरणेपि च'

इति क्रियासारतृतीयोपदेशोक्तप्रकारेण प्रसंगानुसारेण परस्परं पूज्यपूजकभावेन वर्तितव्यमित्यस्माकं प्रमाणैकशरणानामाशयः । ये किञ्चित्पूर्वार्जितदुरदृष्टवशात् तद्भेदं कुर्वन्ति ते तदुपार्जितपापाः सन्तस्तत्फलं महद्दुःखमनुभवन्तु । तस्मात्पापात्मनां कथाप्यश्रेयसे भवतीति भयाद्विरम्यते ॥

एतावता अष्टावरणांतर्गतजंगमपदवाच्याः गुरुस्थलीयचरपट्टांकिता एवेति सिद्धम् । तस्मात् गुरुजंगमयोः शिवेतरत्वाभावात् तदेवेत्येवकारेण तत्पादोदकप्रसादग्रहणं न निषेधितं श्रुतिदेव्या । तदुक्तं रेणुकभगवत्पादैः—

